उच्चशिक्षाविभागः जम्मूकश्मीरसर्वकारः
सिविलसचिवालयः जम्मूः 180001
सम्पर्क सूत्राः 0191.2542880, 0191.2546454,
0194.2506062, 9419015150
E-mail : asgarsamoon@gmail.com
www. jkhighereducation.nic.in

जम्मू काश्मीर संस्कृत परिषद,
42/11 वरनाई रोड बनतलाव, जम्मू–181123
सम्पर्क सूत्र– 9419147073, 9419221735

ISSN 2320-6454

# वाङ्मय गौरवम्

# VANGMAYA GAURVAM

अंक : १४ वर्षः ४ जनवरी-मार्च-२०१८

त्रैमासिकी

## मूल्याङ्कितसंस्कृतशोधपत्रिका

(A referred Sanskrit Research Journal)

उच्चशिक्षाविभागः जम्मूकश्मीरसर्वकारः
Higher Education Department
Government of Jammu & Kashmir

जम्मूकाश्मीर संस्कृतपरिषदम्, जम्मू –181123
J&K SANSKRIT SOCIETY, JAMMU-181123

# वाङ्मय गौरवम्

**VANGMAYA GAURVAM**

त्रैमासिकी

मूल्याङ्कितसंस्कृतशोधपत्रिका

(A Referred Sanskrit Research Journal)

वर्षम् : ४, अंकः १४, जनवरी-मार्च २०१८

प्रधानसंपादकः

**डॉ. असगर हसन सामूनः**

प्रधानसचिवः

**उच्चशिक्षाविभागः जम्मूकश्मीरसर्वकारः, जम्मूः।**

सम्पादकः

**डॉ. पारस शास्त्री**

असिस्टेंट प्रोफेसर राजकीयमहाविद्यालयः सुन्दरबनी

आईएसएसएनू : २३२०-६४५४

**प्रकाशकः**
उच्चशिक्षाविभागः जम्मूकाश्मीरसर्वकारः एवं
जम्मूकाश्मीरसंस्कृतपरिषदम्, जम्मूः।

**सदस्यताशुल्कम्**

| | | |
|---|---|---|
| एक प्रतिशुल्कम् | रु० ५० | रुप्यकाणि। |
| वार्षिकशुल्कम् | रु० २५० | रुप्यकाणि। |
| पंच-वार्षिकशुल्कम् | रु० ११०० | रुप्यकाणि। |

**शुल्कप्रदानप्रकारः**
बैंकधनादेशः (डी० डी०) अथवा सी० टी० सी० चैक माध्यमेन
(सचिवः जम्मूकश्मीर संस्कृत परिषदम्, जम्मूः)
Mode of payment
Demand Draft, Money order or by CTC Cheque
(In favour of Secretary, Jammu Kashmir Sanskrit Society, Jammu )

ISSN : 2320-6454



**मुद्रक :**
शिवा प्रिंटर्स समीपे अयुर्वेदिक औषध्यालायः पलौढ़ाः, जम्मूः -१८११२१
सम्पर्कसूत्रः - ६४१६७४०७२६, ६४१६१८४३६७
E-mail : mkenterpreses8 @gmail.com

**कार्यालयः**

उच्चशिक्षाविभागः जम्मूकश्मीरसर्वकारः
सिविलसचिवालयः जम्मूः १८०००१
सम्पर्क सूत्राः ०१६१.२५४२८८०, ०१६१.२५४६४५४,
०१६४.२५०६०६२, ६४१६०१५१५०
E-mail : asgarsamoon@gmail.com
www. jkhighereducation.nic.in

आईएसएसएन् : २३२०-६४५४



**कार्यालयः**

जम्मूकाश्मीरसंस्कृतपरिषदम्
४२/११ गुड़ाकेरणवरनाई रोड बनतलावः, जम्मूः -१८११२३
सम्पर्क सूत्राः ९४१९१४७०७३, ९९०६०७१४७३
**E-mail:** jksanskritsociety@gmail.com, jksanskritparishad@gmail.com

आईएसएसएन् : २३२०-६४५४

# वाङ्मय गौरवम्

## अनुक्रमणिका

आईएसएसएन् : २३२०-६४५४

# सम्पादकीयम्

**संगच्छध्वं संवदध्वं संवो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे संजनाना उपासते।**

प्राचीनकाले या महर्षि कश्यपेन स्थापिता जम्मूकश्मीरधरित्री सांसारिकजनानां मध्ये धरिव्यां स्वर्गरूपेण समादृते वर्तते। या खलु वेदानां, पुराणानाम्, शास्त्राणां ऋषीणां महर्षीणां च प्राणभूः, यत्र विराजते स्वंभूः, शिवः, यत्र विराजते शिखराणामधिराजो हिमालयः, यत्र प्रवहति झेलम नदी, यत्र अभिनवगुप्तः, मम्मटः, क्षेमेन्द्रः, कल्हणः, विल्हणः, वसुगुप्तादयश्च बभूवुः, तस्मिन् राज्ये संस्कृत **'वाङ्मय गौरवम्'** इति समाख्याता त्रैमासिक शोधपत्रिका जम्मूकाश्मीर राज्यसरकारस्य उच्चशिक्षाविभाग एवं च जम्मूकाश्मीर संस्कृत परिषदस्य परस्पर सहयोगेन प्राकाशयते इति महति हर्षस्य विषयोऽस्ति। महाविद्यालयानां अध्यापकानां अथकपरिश्रमस्ये इयं शोधपत्रिका फलरूपा वर्तते। सत्यं कथयन्ति ऋषयः -

**'उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।**
**न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।।'**

जम्मूकाश्मीरसरकारस्य उद्देश्येषु संस्कृत साहित्यस्य संवर्धनं, विभिन्न विषयेषु शोधकार्यं, विविधभाषासु अनुवादकार्यं चास्ति। विविधासु भाषासु जनप्रियाः एतादृशाः अनेके साहित्यकाराः, कथाकाराः, कवयः, लेखकाश्च सन्ति। येषां संस्कृत साहित्यं पठितुं सामाजिकाः सदैव उत्सुकाः भवन्ति। संस्कृतसाहित्ये ऋग्वेदादारभ्य लौकिकसंस्कृतसाहित्यपर्यन्तं व्यापकं वैज्ञानिकविवेचनं विद्यते। इदं विवेचनम् आधुनिकानां समस्यानां समाधानं, तदुपायानां चोल्लेखोऽत्र पर्याप्त रूपेण प्राप्यते। एवं प्रकारेण संस्कृतसाहित्ये विविधभाषाग्रन्थानाम् अनुवादः तेन प्रमाणेन नाऽभवत् येन प्रमाणेन आवश्यकः आसीत्। प्राचीनकालेऽस्माभिः ऋषिभिः, पण्डितवर्यैश्च वैज्ञानिक-विषयेषु ये ग्रन्थाः प्रणीताः, तेषां गम्भीरमध्ययनं विधायाधुनिकदृष्ट्या तेषां प्रतिपादनं विधेयम्। अनेन भारतस्य प्राचीन वैज्ञानिक-विषयाणामाधुनिक-विज्ञानेन सार्धं समन्वयः स्यात्। वैज्ञानिक-विषयाणां क्षेत्रे अनुसन्धानस्य नव प्रादुर्भावो भवेत्। विश्ववाङ्मयेषु संस्कृतं श्रेष्ठरत्नम् इति न केवलं भारते अपितु समग्रविश्वे एतद्विषये निर्णयकतृभिः जनैः स्वीकृतम्। व्याकरण-ध्वनिशास्त्र-दृष्ट्या विश्वस्य काऽपि भाषा संस्कृतभाषावत् उन्नता नास्ति। संस्कृतभाषायाः प्राचीनाः अत्युच्चकोटिकाश्च रचनाः स्वीये गुणे, शक्तिशालिनि मौलिकत्वे, सौन्दर्ये, सारतत्त्वे, वाक्तत्त्वस्य वैभवे, औदत्त्वे वैशाल्ये च विश्वस्य, सम्पूर्णक्षत्रे अग्रपङ्क्तौ विराजन्ते।

इयं भाषा तदा जनभाषारूपेण विद्यमाना आसीत् यदा देशोऽयं विश्वे जगद्गुरुः सुवर्णचटकेत्यादिभिः संज्ञाभिः अभिधीयते स्म। इदानीमपि केचन विश्वविद्यालयाः, महाविद्यालयाः, विद्यापीठानि, पाठशालाश्च शासनानुदानात्, धनिक वर्गाणां आर्थिकसाहाय्येन वा संस्कृताविद्यानां पठने पाठनेऽनुसन्धाने, ग्रन्थानां प्रकाशने सम्पादने वा निरतानि सन्ति, किन्तु तत्र छात्राणां संख्या प्रतिवर्षं ह्रासं याति। संस्कृतं लोकभाषा भवतु, जनाः संस्कृतसम्भाषणे च प्रवीणा भवन्तु इति विचार्य **'वाङ्मय गौरवम्'**

इति नाम्ना त्रैमासिक शोधपत्रिका सम्प्रति प्रकाश्यमानाम्।

संस्कृतविषयस्याध्यापनं विद्यालयेषु, महाविद्यालयेषु विश्वविद्यालयेषु च संस्कृतमाध्यमेनैव भवेत। किन्तु श्रूयते यत् संस्कृतविश्वविद्यालयेषु विद्वांसः प्रायशो मातृभाषयैवाध्यापनं कुर्वन्ति। एषा स्थितिर्नितरां शोचनीयाऽस्ति। संस्कृत-महाविद्यालयेषु, संस्कृत-विश्वविद्यालयेषु, राष्ट्रिय-संस्कृत-संस्थनेषु, संस्कृत-विद्या-शोध-केन्द्रेषु, संस्कृत-शोध-संस्थासु च वेद-वेदाङ्ग-दर्शनपुराण-तन्त्र-साहित्य शिल्पादिकानां ग्रन्थानामध्ययनं चिन्तनम् अध्यापनं वा अत्यन्तया सरलया संस्कृत-भाषयैव सर्वदैव भवेत्।

**'सङ्घे शक्तिः कलौयुगे'** वचनमिदं सत्यमङ्गीकृत्य संस्कृतज्ञाः संस्कृतानुरागिणश्च यत्र कुत्रापि तिष्ठन्ति, ते सर्वे सम्भूय स्वशक्त्या संस्कृत-भाषायाः साहित्यस्य शास्त्राणां च प्रचाराय प्रसाराय संरक्षाणाय च दृढतया संलग्नाः भवेयुः। शास्त्रज्ञाः शास्त्राणां वैज्ञानिक-दृष्ट्या नूतन-विवेचनां कुर्युः इति मम प्राथना।

वाङ्मय गौरवम् त्रैमासिकी शोधपत्रिका संस्कृतभाषायाः परिवर्धनाय सहयोगी भविष्यति, इत्यहं मन्ये। इयं पत्रिका स्वनवीनरूपे लोकमध्ये संजीवनीरूपे भविष्यति, इति विश्वासः। अतएव निवेदनं विद्यते यत् विभिन्नविषयान् अधिकृत्य संस्कृतशोधपत्रिकानां प्रकाशनीयम् एवं च विद्यालये, महाविद्यालये, विश्वविद्यालये, शासनकार्यालये, केन्द्रग्रन्थालये, राज्यग्रन्थालये च संस्कृतशोधपत्रिकां उपलब्ध कृत्वा संस्कृतानुरागिणां छात्राणां कृते च संस्कृताध्ययनार्थं प्रोत्साहनं दातव्यम्। यदि इदं महत्तमं कार्यम् भविष्यति तर्हि संस्कृतस्य प्रचारप्रसारः भविष्यति। अनेन प्रकारेण अस्माकं राज्ये पुनः संस्कृतभाषा स्वप्राचीनरूपम् अधिगमिष्यति।

प्रधान सम्पादकः
**डॉ. असगर हसन सामून**
प्रधानसचिवः उच्चशिक्षाविभागः
जम्मूकश्मीरसर्वकारः, जम्मूः

आईएसएसएनन् : २३२०-६४५४

# 'औपनिषदिकं अध्यात्मचिन्तनम्'

**प्रो. केदार नाथ शर्मा**
अध्यक्ष, संस्कृत विभागः
जम्मू विश्वविद्यालयः,जम्मूः

**संक्षिप्तिका** – भारतीयदार्शनिकेषु आध्यात्मिकेषु च चिन्तनेषु वेदानां उपनिषदाञ्चास्ति महत्त्वपूर्णं योगदानम्। उपनिषत्सु अध्यात्मविद्यायाः सारगर्भितं सुनियोजितञ्च वर्णनमुपलभ्यते। अस्माकं ऋषीणां प्रज्ञायाः विलक्षणं निदर्शनमस्ति उपनिषत्साहित्यम्। जीव–जगत्परमार्थतत्त्वविषये भारतीयमनीषीणां तात्त्विकं वैज्ञानिकञ्च ज्ञानमुपनिषत्सु संगृहीतम्। **'यत्पिण्डे तद् ब्रह्माण्डे'** इति वाक्यमनुसरन्तोऽस्माकं पूर्वजाः मानवजीवने आध्यात्मस्य महत्त्वपूर्णं स्थानं स्वीकृतवन्तः।

आध्यात्मिकदृष्ट्या उपिनषत्सु प्रधानतया यद्यपि ब्रह्म–जीव–जगदादिविषयेषु एव गहनं चिन्तनं उपलभ्यते, परन्तु गौणरूपेण भारतीयसंस्कृतेः विधि–पक्षाणां, सदाचारस्य, नैतिकमूल्यानां, त्रिवर्गस्य (धर्मार्थकामानां) चापि वर्णनमत्र दृश्यते। प्रस्ताविते शोधपत्रे उपनिषत्सु वर्णितमध्यात्मचिन्तनं तत्सारञ्च संक्षेपेण प्रस्तोष्यते।

**बीज–पदानि–** अद्वैतम्, अपराविद्या, आध्यात्मम्, उपनिषत्, कोशमयः, जीवः, जगत्, द्वैतम्, पराविद्या, प्रस्थानत्रयी, प्राणमयः, पराञ्चिखानि, विजरः, विशिष्टाद्वैतम्, विमृत्युः, विज्ञानमयः, विस्फुलिङ्गाः, विवृणुते, सृष्टिः, लूता।

उप–निपूर्वकस्य विशरण–गत्यवसादनार्थस्य षद्लृधातोः क्विबन्तस्य उपनिषद् इति पदस्य 'उपनिषदति प्राप्नोति ब्रह्मात्मभावोऽनया इति उपनिषद्' इति व्युत्पत्तिलभ्योऽर्थः।[1] 'ब्रह्मविद्या' इत्येतया संज्ञया अभिहिताः उपनिषदः पराविद्या इति पदेनापि व्यपदिश्यन्ते। तासु ब्रह्मणः आत्मनो वा स्वरूपस्य, तदवाप्त्युपायस्य, जीवस्य, जगतश्च वर्णनपूर्वकं भारतीयसंस्कृते र्विविध–पक्षानां,जीवनमूल्यानां, नैतिकादर्शानां किञ्च आध्यात्मिकविद्यायाः गूढतमानां रहस्यानाञ्च विशदतया वर्णनं विहितं महर्षिभिः। भारतीयदर्शनसाहित्ये वेदान् अवलम्बमानं मानवजीवनस्य चरमं लक्ष्यं तदवाप्तिसाधनञ्च उपदेशयन्तः उपनिषद् भगवद्गीता– व्यासप्रणीतं ब्रह्मसूत्रञ्चेति सन्ति त्रयः प्रस्थानग्रन्थाः। ये 'प्रस्थानत्रयी' इत्येतया संज्ञया विद्वत्सु सुविदिताः। प्रस्थानत्रय्यामपि गीता ब्रह्मसूत्रञ्चेति द्वयमपि उपनिषदाश्रयमेव। अतः प्रस्थानत्रय्यां उपनिषद एव महनीयतमाः, अतः ता एव परमप्रमाणत्वेन संग्राह्याः। मुण्डकोपनिषदि वेदादीनां गणना अपरा–विद्यायां विद्यते, उपनिषदाञ्च पराविद्यायाम्। अपराविद्यालौकिकविषये प्रधाना,परा च ब्रह्मज्ञानप्रधाना अत एव उच्यते–**तत्रापरा ऋग्वेदो यजुर्वेदः, अथ परा यया तदक्षरमधिगम्यते।**[2] उपनिषदां संख्या निश्चिता नास्ति। मुक्तिकोपनिषदि अष्टोत्तरशतोपनिषदां सूची लभ्यते।[3] परं तत्रैवागतेन **'सर्वोपनिषदां मध्ये सारमष्टोत्तरशतम्'** इति वाक्येन ज्ञायते यद् उपनिषदां संख्या

अष्टोत्तरशततोऽप्यधिका आसीत्। साम्प्रतं विंशत्यधिकद द्विशतं उपनिषद उपलभ्यन्ते। प्राप्तासु विंशत्युत्तरद्विशतसंख्याकासु उपनिषत्सु ईश–केन–कठ–प्रश्न–मुण्डक–माण्डूक्य– तैत्तिरीय–ऐतरेय–छान्दोग्य–बष्हदारण्यक –श्वेताश्वतरोपनिषदः। एताः शङ्कराचार्यभाष्यभूषितत्वाद् अतिमहत्त्वपूर्णाः लोकप्रियाश्च सन्ति।

प्रत्येका उपनिषत् केनापि वेदेन संबद्धा वर्तते। उपनिषत्सु काश्चनोपनिषदः पद्यमयः,काश्चन गद्यमयः, काश्चनश्च गद्य–पद्यमयः सन्ति। का उपनिषत् कदा रचिताभवत्, इति विषये विद्वत्सु मतैक्यां नास्ति। परं एतद् निश्चितं यद् उपनिषदां रचना एकस्मिन् काले नैवाभवत्, अपि तु भिन्न–भिन्न कालखण्डेषु तेषां रचनाभवत्। प्रधानोपनिषदो रचना बुद्धात्प्रागेव अजायत इति इतिहासाविदां मतम्। उपनिषद्ग्रन्थेषु अद्वैत–विशिष्टाद्वैत–द्वैतप्रतिपादकानां श्रुतिवाक्यानां अस्तित्वं विद्यते। एतस्माद् एव कारणात् अदैतादिवादिभिः आचार्यैः स्व–स्व सिद्धान्तानुकुलानि श्रुतिवाक्यानि उद्धृत्य स्व–स्वभाष्येण अद्वैत–विशिष्टाद्वैत–द्वैत–मतानि प्रतिपादितानि। शङ्करः स्वभाष्येण अद्वैतम्, श्रीरामानुजाचार्यः विशिष्टाद्वैतम्, माध्वाचार्यश्च द्वैतं प्रतिपादितवान्।

### 1. उपनिषदां प्रमुखतमाः प्रतिपाद्यविषयाः–

उपनिषत्सु ये विषयाः प्रतिपादिताः तेषु जीव–ब्रह्म–ईश्वराणां स्वरूपम्, जीवात्मनो लक्ष्यम्, आत्मानः स्वरूपं, जीव–ब्रह्मणोरैक्यम्, सृष्टेः मूलरूपम्, जगतः प्रलयोदयौ, अध्यात्मज्ञानस्य महत्त्वम्, मोक्षावाप्तेः साधनानि, ब्रह्मसत्कारस्य लाभाः इत्यादयः सन्ति। एतेष्वपि आत्मानो ब्रह्मणो वा स्वरूपम्, ब्रह्म, जीवात्मा जगत् च प्राधान्येन विवेचिताः। पत्रस्याग्रिमपृष्ठेषु एतेषां एव समासेन विवेचनं क्रियते–

### 2. उपनिषत्सु आत्मविवेचनम्–

उपनिषदां प्रधानः प्रतिपाद्यो विषय आत्मा एव अस्ति। संहितासु आरण्यकग्रन्थेषु च ब्रह्म आत्मनो भिन्नं इत्येतेन रूपेण प्रतिपादितमस्ति परन्तु उपनिषत्सु **'ब्रह्म आत्मानो न भिन्नम्'** इत्येतेन प्रकारेण व्याख्यातमस्ति। ब्रह्मात्मनोरभिन्नत्वात्– **'आत्मैव एकः सर्वत्र न च आत्मानं विहाय कोऽपि अन्यः पदार्थः'** इति उपनिषत्सु विवेचनम्। आत्मतत्त्वं पूर्णमस्ति। नास्ति किमपि ब्रह्माण्डे तद् व्यतिरिक्तम्। आत्मैव द्रष्टा स एव च दृश्यः। दृष्ट–दृश्ययोर्नास्ति कोऽपि भेदः। आत्मैव सर्वव्यापी वर्तते। विश्वस्य सर्वेष्वपि पदार्थेषु स एव व्याप्तोऽस्ति। आत्मन्येव समग्रस्यापि प्रपञ्चस्य लयोभवति। नैवास्ति ततो व्यतिरिक्तं किमपि।[4] अयमात्मा पापशून्योऽजरोऽमरो विशोकः क्षुत्पिपासारहितः सत्यसंकल्पश्चास्ति। स एव अन्वेष्टव्यो विजिज्ञासितव्यश्चास्ति। आत्मज्ञानी सर्वान् लोकान् सर्वान् कामांश्चावाप्नोति।[5]

### 3. सर्वं खल्विदं ब्रह्म–

उपनिषदां मते आत्मपरमात्मयोर्न कोऽपि भेदः। अत्र ब्रह्म एव आत्मा इत्येतेन संज्ञया संबोधितः। उपनिषत्सु आध्यात्मिकान् रहस्यान् समुद्घाटयन् **'सर्वं खल्विदं ब्रह्म'**[6] इति प्रतिपादितम्। जगति दृश्यं अदृश्यं चरं अचरं वा सर्वं वस्तु ब्रह्म एव। स एव सृष्टिं रचयामास।[7] ब्रह्म एव जगतः निमित्तं उपादानं च कारणं अस्ति। 'यथा–लुता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपदानं च भवति।[8] तथैव

ब्रह्म (परमात्मा) अपि विनैव बाह्यसहाय्यैर्निजया शक्त्या सृष्टेः उपादानकारणम् एवं च चैतन्यांशप्राधान्यात् निमित्तकारणञ्च भवति। मुण्डकोपनिषद् आह– **लूता यथा स्वनाभ्या तन्तुं सृजते, तेनैव गृह्णाति, पृथिव्यां ओषधयः सम्भवन्ति, पुरुषात् केशलोमनि सम्भवन्ति, तथैव अनश्वरात् ब्रह्मणो विश्वं सम्भवति।**[9] स्वप्रकाशशीलं ब्रह्म पूर्वकामत्वात् आनन्दघनम् इत्युच्यते। ब्रह्म अनन्तमद्वितीयञ्चास्ति –

**एकमेवाद्वितीयं सन्नामरूपविवर्जितम्।**
**सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं यदितीर्यते।।**

नामरूपादिहीनं तत् निरपेक्षं स्वतन्त्रं शुद्धमतीन्द्रियञ्च अस्ति।[10] माया अस्य शक्तिर्वर्तते,परं एतत् मायया लिप्तं न ज्ञायते, नामरूपादिहीनमेतद् अव्यक्तं तेजः–

**निरस्तमायाकृतसर्वभेदं नित्यं विभुं निष्कलमप्रमेयम्।**
**अरूपमव्यक्तमनाख्यमव्ययं ज्योतिः स्वयं किञ्चिदिदं चकास्ति।।**[11]

सम्पूर्णं जगद् ब्रह्मण एव विवर्तम्– छान्दोग्योपनिषद् आह – **सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्कृकृकृतदैक्षत एकोऽहं बहुस्याम् प्रजायेयेतिकृकृकृयथा सौम्यकेन मृत्पिण्डेन सर्वं मृन्मयं,**[12] **विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृतिकेत्येव सत्यम् कृकृयथा अग्नेः क्षुद्राः विस्फुलिङ्गाः निर्गच्छन्ति तथैव ब्रह्मणः (आत्मनः) सैव जीविनो लोकाश्च निर्गच्छन्ति।**[13] सर्वभूतेषु व्याप्तं तदेव सर्वभूतान्तरात्मा[14]। उदकं प्राप्य यथा लवणं उदके एव विलीनं भवति एवमेव ब्रह्म जगतः प्रतिकणं व्याप्तमस्ति।[15]

**4. ब्रह्मप्राप्तेः साधनम्–**

उपनिषत्सु ब्रह्मप्राप्तेः साधनमपि वर्णितं वर्तते। कठोपनिषद् रूपकमाश्रित्य ब्रह्मप्राप्तेः साधनं वर्णयन् आह– यथा रथे रथी भवति तथैव शरीररूपे रथे आरूढोऽयमात्मा रथिरूपेण स्थितः। इन्द्रियाणि हया इव शरीररूपरथस्य वाहकाः सन्ति। बुद्धिश्च रथनियन्त्रणकर्त्री सारथिरिव चित्रिता।[16] आत्म–साक्षात्कारे सति जीवस्य पुनर्जन्म न जायते।[17] रूप–रस–गन्ध–स्पर्श–शब्दाः इन्द्रियाणि ब्रह्मप्राप्तौ (परमार्थतत्त्वोपलब्धौ) क्षीणसामर्थ्यवन्ति भवन्ति। बहिर्मुखानि इन्द्रियाणि बाह्यभौतिकविषयेषु एव रमणाद् उपक्षीणबलानि जायन्ते, अत एव कठोपनिषदि पराञ्चिखानि इत्युक्तमस्ति इन्द्रियाणां विषये। कठोपनिषद् आत्मोपलब्धये श्रेयसो मार्गावलबनमेवोपदिशति। नायं आत्मा (ब्रह्म) प्रवचनादिभिर्वेदाध्ययनेन वा लभ्यः अपि तु दृढेन तपसा, सत्यानुरागेण, अनन्यया निष्ठया, विमलेन ज्ञानेन, लब्धुं पार्यते। साधको यमात्मानं वृणुते तेनैव स तमाप्तुं सक्षमः। आत्मजिज्ञासुं प्रति स्वयमेव आत्मा स्वकीयं रूपं अभिव्यनक्ति–

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुनाश्रुतेन।**
**यमवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्।**[18]

**5. जीवस्य स्वरूपानुभवः–**

ब्रह्मणो मूर्तामूर्तभेदेन रूपद्वयं भवति। एकं मर्त्यम् अपरञ्च अमर्त्यम्। अमर्त्यश्च तत् 'परात्मेत्येतदपि उच्यते। अयमेव परमात्मा अविद्याहेतोर्बन्धने निपत्य 'जीवात्मा' इत्येतदपि कथ्यते। स पूर्वजन्मकर्मवशात् सुखानि दुःखानि च भोक्तुं जगति जन्म गृह्णति। पुनः पुनः जायते म्रियते च। उपनिषदां कथनमेतत्– वर्तमानसमये नराः स्वकीये जीवने यादृशं कर्म आचरन्ति, ते भाविनि काले तादृशमेव जीवनपि प्राप्स्यन्ति। तेन भाविजीवनं उत्तमं सर्वविधतया समुन्नतं च कर्तुं सदा शुभान्येव कर्माणि करणीयानि।

ज्ञानं हि मुक्तेः परमं साधनमतो ज्ञानमर्जनीयम्। सत्कर्मकर्ता नरः अवसाने सति सत्स्वरूपं सद्देशं सच्छरीरमवाप्नोति। तपश्चरणात् पुण्यानां अभ्युदयाच्च ज्ञानबलेन तस्य वासना विनश्यति, क्रियमाणानि कर्मणि विलीयन्ते, सञ्चितानि च कर्माणि हतशक्तिकानि जायन्ते। एवं ज्ञानदशां प्राप्तो जनः जीवन्मुक्त इत्युच्यते। जीवनमुक्ततायां प्रारब्धकर्मानुसारं जीवस्य स्थूलं शरीरं सन्तिष्ठते, नष्टे च सति प्रारब्धकर्मणि शरीरमपि निपतति। ततश्च जीवः स्वकीयस्य रूपस्य प्रत्यक्षभावेन अनुभूतिं कुरुते। तत्त्वज्ञानेन ब्रह्मसाक्षात्कारेण च जीवो मुक्तिं लभते।[19]

### 6. जीवात्मब्रह्मणोरैक्यम् –

जीव–ब्रह्मणोरैक्यप्रतिपादनमस्ति उपनिषदामन्यतमो महत्त्वपूर्णः प्रतिपाद्यः विषयः। वेदान्तसंमतैर्द्वादशमहावाक्यैरपि जीवात्मनोरैक्यं प्रतिपादितम्। द्वादश महावाक्यानि सन्ति– तत्त्वमसि,[20] अहं ब्रह्मास्मि[21], अयमात्मा ब्रह्म'[22], एष त आत्माऽन्तर्याम्यमृतः,[23] स यश्चायम्,[24] पुरुषे यश्चासौ,[25] आदित्ये स एकः,[26] प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म विज्ञानमानन्दं ब्रह्म,[27] सत्यं ज्ञानमनन्तं ब्रह्म,[28] स एतमेव पुरुषं ब्रह्म,[29] सर्वं खल्विदं ब्रह्म,[30] एकमेवाद्वितीयम्।[31]

उपर्युक्तेषु महावाक्येष्वपि एते चत्वारो महावाक्याः सन्ति महनीयतमाः– प्रज्ञानं ब्रह्म,[32] अहं ब्रह्मास्मि,[33] अयमात्मा ब्रह्म,[34] तथा तत्त्वमसि।[35] एतेषु महावाक्येषु **'तत्त्वमसि**'इत्यादीभिर्महावाक्यै यद्यपि जीवात्म–ब्रह्मणोरैक्यं सम्यक् प्रतिपादितं भवति परन्तु शङ्का अत्र जायते यत्– क्लेश–कर्मादिबद्धोपाधिविशिष्टस्य जीवात्मनो निरुपाधिक– शुद्ध–बुद्ध–मुक्त–स्वभावेन ब्रह्मणा केन विधिना ऐक्यं सम्भवति? तर्हि एताविधिां शङ्कां निराकर्तुं वेदान्तविदो वदन्ति यत् 'तत्त्वमसि' इत्यादि वाक्यस्य यथार्थबोधासम्भवात् लक्षणा अङ्गीक्रियते। एवमत्र जहदजहल्लक्षणया यथार्थबोधो भवति। तत्त्वमसि इति महावाक्ये **'तत्–त्वम्'** इत्येतयोर्मध्ये विद्यमान–परोक्षत्वापरोक्षत्वविशिष्टांशौ परस्परविरुद्धौ परिहरन्ती इयं लक्षणा अखण्डचैतन्यांशञ्च परिगृहन्ती आत्म–ब्रह्मणोरैक्यं प्रतिपादयति।

इत्युपनिषत्प्रतिपादित एकत्ववादो जीव–ब्रह्मणोरैक्यं प्रतिपाद्य वेदान्तस्य प्रमातारं साधकं 'जीवो ब्रह्मैव नापरः' इत्र्थबोधं कारयति।

स आत्मा (ब्रह्म) नित्यं सत्येन तपसा सम्यग्ज्ञानेन ब्रह्मचर्येण च लभ्यो भवति न तु कादाचित्कैः सत्यादिभिः साधनैरात्मा लभ्यते–

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्।**
**अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः।।**[36]

अयं आत्मा तस्यैव दर्शन–श्रवण–मनन–विज्ञानादिभिः वेदितव्यो भवति।[37] ब्रह्मविद्येयं अपात्रभूताय न प्रदातव्या इत्युपनिषत्सु बहुषु स्थलेषु कथितम्।[38] गुर्वनुमतो शान्ताचित्तो जितेन्द्रियः क्षीणकामक्रोधादिदोषो वैराग्यादिगुणशीलो मुमुक्षुरेव ब्रह्मविद्यायाः पात्रम्–

**प्रशान्तचित्ताय जितेन्द्रियाय प्रहीणदोषाय यथोक्तकारिणे।**
**गुणान्वितायानुगताय सर्वदा प्रदेयमेतत् सततं मुमुक्षवे।।**[39]

### 7. उपनिषत्सु मोक्षविचारः–

उपनिषत्सु मानवजीवनस्योत्कृष्टतमः पुरुषार्थो मोक्षोऽभिमतः दुर्लभं मनुष्यजीवनमवाप्य अपि यो मोक्षाय न मनते स खलु आत्महा कथितः–

**यः स्वात्ममुक्तौ न यतते मूढधीः।**
**स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात्।।**

उपनिषदां मते ब्रह्मसाक्षात्कारेवणैव सर्वपापनिरोधो मोक्षावाप्तिश्च सम्भवति–

**वेदाहमेतं पुरुषं महान्तमादितावर्णं तमसः परस्तात्।**
**तमेव विदित्वातिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय ।।**[40]

ब्रह्मतत्त्वस्य ज्ञानादेव मुक्तिर्मोक्षो वा भवितुमर्हति आत्मज्ञानं विना अनात्मज्ञानजनितं स्वप्नं न नश्यति–

**मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यया।**
**स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा।।**[41]

अविद्याकष्तं जन्ममृत्युं तीर्त्वा विद्यया मोक्षं (अमष्तम्) अश्नुते–

**विद्या चाविद्यां च यस्तद् वेदोभयं सह।**
**अविद्यया मुत्युं तीर्त्वा विद्ययाऽमृतमश्नुते।।**[42]

यदा साधकस्य हृदि स्थिताः सर्वे कामाः निवर्तन्ते तदा मरणधर्माऽसौ अमृते भूत्वा जीवन्नेव ब्रह्मानन्दमनुभवति।[43] असंसारिणः परब्रह्मणः साक्षात्कारस्य फलं निरूपयन्ति मुण्डकोपनिषद् वक्ति–
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।

**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।**[44]

वस्तुतः निरूपाधिक–चित्प्रकाशस्वरूप अक्षरब्रह्मणः साक्षात्कारे सति जीवोऽपि ब्रह्मरूपो भवति।[45] उपनिषत्सु वेदाभिमत त्रैतवादस्य, निष्कामकर्मयोगस्य, विश्वबन्धुत्वभावनायाः, ज्ञानकर्मयोः समन्वयस्य चापि वर्णनमुपलभ्यते–

## 8. उपनिषत्सु त्रैतवादः –

उपनिषत्सु वेदाभिमतस्य त्रैतवादस्य वर्णनमुपलभ्ये। तत्रैक ईश्वरः कर्मफलस्य अभोक्ता केवलं साक्षिरूपः, द्वितीयो जीवः कर्मफलभोक्ता, तृतीया प्रकृतिश्च अचेतना। श्वेताश्वतरोपनिषदि दृष्टान्तरूपेण प्रकृतिः वृक्षः, जीवेश्वरौ च तत्रस्थौ द्वौ पाक्षिणौ इति दर्शितम्–

**द्वा सुपर्णा सजुया सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।।**[46]

जीव–परमात्मनोर्मध्ये तत्त्वतः ऐक्यभावेऽपि जीवोऽज्ञानवशात् अनेकविधकामवासनावशाद् सुखदुःखलक्षणं कर्मफलं भुङ्क्ते, अन्यो नित्य–शुद्ध–बुद्ध–मुक्तस्वभावः परमेश्वरः सर्वमपि पश्यन् साक्षी इव आस्ते।

## 9. निष्कामकर्मयोगः–

अनासक्तिभावनया कियमाणां कर्म निष्कामकर्म इत्युच्यते। निष्कामभावनया कृतं कर्म इहलोकपरलोकोभयकल्याणकरं भवति। निष्कामभावनया कर्मणिरतो जनः सिद्धौ वा असिद्धौ, लाभे वा हानौ, न कदापि उदविग्नो भवति। कर्तव्यभावनया अनासक्तमनसा कर्म कुर्वन् निष्कामकर्मा फलस्य चिन्तां न करोति। भगवद्गीतायां प्रतिपादितस्य निष्कामकर्मयोगस्य मूलं ईशोपनिषदि एवं प्रतिपादितम्–

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।।**[47]

कर्माधीनं जीवनं इति मत्वा अनासक्तिभावनया कृतं कर्म जीवस्य बन्धनहेतुर्न भवति, न च तद्दुःखसाधनम्। अनासक्तिभावनया कर्म कुर्वन् जनो जीवने सफलतामवाप्य अन्ते मोक्षस्य पात्रं भवति।[48]

**10. उपनिषत्सु सृष्टिवर्णम्–**

उपनिषत्साहित्यस्य प्रतिपाद्येषु विषयेषु जगतः सृष्टिविज्ञानमपि अस्ति अन्यतमो विषयः। जगतः प्रादुर्भावतिरोभावविषये यादृशं प्रामाणिकं तथ्यमुपनिषद्ग्रन्थाः प्रस्तुवन्ति, न तादृशं अन्यत् किमपि साहित्यम्। ब्रह्माण्डे बहुविधानि तत्त्वानि समाविष्टानि सन्ति तेषां तत्त्वानां उत्पत्तिर्विकासश्चापि उपनिषत्सु वर्णितौ। कथं पांचभौतिकमिदं जगत् गुणत्रययोगेन सर्वेषां पदार्थानां क्षेत्राणि विषयाश्च निर्धारयति इति विचारस्य मौलिकं निरूपणं उपनिषद्ग्रन्थेषु उपलभ्यते। तैतिरीयोपनिषदि आत्मतत्त्वादेव आकाश–वायु–अग्नि–जल–पृथिवी–ओषधि–आन्नादीनाञ्चोत्पतिर्दर्शिता।[49]

पञ्चषु भूतेषु कतमं प्रथमं समुद्भुतं जगति, इति जिज्ञासायां छान्दोग्योपनिषद् निगदति–

**सत् एव आदौ आसीत् तेन तेजः तेजश्च पः सृजिताः।**[50]
**उपनिषदां मते आदौ सृष्टेः किमपि नासीत्। केवलं मृत्युरासीत्।**
**ततश्च मनः सलिलानलभुवः समुदभूताः।**
**ततः प्रजार्पतः सुरा असुराश्च अभूवन्।**[51]

बृहदारण्यकोपनिषदि इदमपि वर्णितं यत् प्रथमं पुरुषस्योत्पत्तिरभवत् पश्चाच्च स्त्रिया उत्पत्तिरभुत्। ताभ्याञ्च सृष्टिरुत्पन्ना इति।[52] 'सर्वे भवन्तु सुखिनः',आत्मवत्सर्वभूतेषु इत्यादिभिः संस्कारैः पूतानां अस्माकं महर्षयीणां लक्ष्य सर्वप्राणि–हितसाधनम्। सर्वप्राणिषु समत्वबुद्धिं आश्रित्य जगतोहित चिन्तने परायणानां एतेषां मते विश्वेऽस्मिन् ह्ये न कोऽपि निजः परो वेति भवति अपितु उदारहत्यानां ह्येतेषां कृते तु देशीया विदेशीया वा, भुवि स्थिताः सर्वे अपि एकस्यैव परमात्मनः सन्ततित्वाद् स्वकुटुम्बिन एव। अल्पधिय एव जना 'इमे मम', 'ते परकीयाः' इति विभेदं कुर्वन्ति। सर्वहितकङ्क्षिणां कृते तु विश्वस्य निखिलेऽपि जनाः स्वबान्धवा इव प्रतीयन्ते। विश्वबन्धुत्वस्यैषोपदेश ईशोपनिषदि साधुः प्रतिपादितः–

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विजिगुप्सते।।**[53]

**11. कर्मानुष्ठाने जीवस्य स्वातन्त्रयम्–**

उपनिषदां मते कर्मानुष्ठाने जीवः सर्वथा स्वतन्त्रोऽस्ति। बृहदारण्यके प्रोक्तं यत्– पुरुषः काममयोऽस्ति, यादृशी तदीया इच्छा भवति, तादृश एव तस्य संकल्पोभवति।[54] यादृशं कर्म आचरणं वा स करोति तत्स्वभावः स भवति। शुभकार्येण स साधुर्भवति, अशुभकार्येण च पापी भवति। पुण्येन कर्मणा पुण्यः पापेन च भवति पापः। उपनिषदः मानवान् पुरुषार्थाय प्रेरयन्ति–

**शुभाशुभाभ्यां वहन्ती मार्गाभ्यां वासना सरित्।**
**पौरुषेण प्रयत्नेन योजनीया शुभे पथि ।**

**अशुभेषु समाविष्टं शुभेष्टवेवावतारद्येत।।**[55]

अतः मानवस्य कर्त्तव्यमस्ति यत् स जीवने शुभकर्मानुष्ठानेन अशुभकर्मत्यागेन च लौकिकं पारलौकिञ्च जीवनमुद्धारयेत्।

## 12. उपनिषदां महत्त्वम् –

उपनिषदां महत्त्वम न केवलं भारतीयैः अपितु पाश्चात्यैरपि विद्वद्भिः स्वी कृतम्। अध्यात्मविद्यायाः यादृशं निदर्शनं उपनिषत्सु समुपलभ्यते, विश्वसाहित्ये तद्दुर्लभम्। उपनिषदां महत्त्वेन प्रभावितो राजकुमारः दाराशिकोः सप्तदशतमशताब्ध्यां पञ्चाशद् उपनिषदां पारसी (फारसी) भाषायां अनुवादं चकार। कोलब्रुककृते संग्रहे द्विपञ्चाशत् उपनिषदः संग्रहीताः। जर्मनमनीषी मैक्समूलरः आचार्यशङ्करभाष्येण विभूषिताः एकादशोपनिषदः मैत्रायणी–उपनिषच्चानूदितवान् आङ्गलभाषायाम्। ओथमफ्रांकः उपनिषग्रन्थान् अधीत्य तान् संक्षेपेण प्रकाशितवान्। जे॰ डी॰ लंजुइनास उपनिषद् ग्रन्थेषु भूरि भूरि प्रयासं कृतवान्। वेवरः महोदयः 'इण्डिस्केन स्टडियन' इत्याख्यग्रन्थे उपनिषदामनुवादो विहितवान् येन पाश्चात्यजगति उपनिषदां प्रसारः प्रचारश्चाभवत्। आंकेत्वेलदुपेरां नामकफ्रेंचविदुषा विहितं लेटिनभाषानुवादं अधीत्य प्रसिद्धः दार्शनिकः शोपेनहावर उपनिषदां गुणानुवादं कुर्वन्नाह– 'एता उपनिषदो मम जीवनस्य शान्तिसाधिकाः, मरणान्तरं चापि शान्तिसाधिका भविष्यन्ति'।[56]

## निष्कर्ष –

औपनिषदिकाध्यात्मिकाचिन्तनस्य निष्कर्षोऽयं यत् निखिल जगति, ब्रह्माण्डे वा समस्तप्राणिषु जड पदार्थेषु च एक आत्मा विद्यते। नित्य–बुद्ध–शुद्धस्वरूपोऽयमेक एव अरोऽमरश्च वर्तते। अयमेव एकाकि सृष्टि रचयति (बृहदारण्यकोपनिषद् 1.4.10–17) जीवोऽपि ब्रह्म एव। अविद्यावशादेव जीवो बन्धने निपत्य जरामरणादिदुःखमनुभवति। जीवनेऽस्मिन् शुभकर्मणामाश्रयेण, ज्ञानदशां च प्राप्य जीवन् मुक्तः सन्। प्रारब्धसकर्मफलं भुङ्क्त्वा प्रारब्धकर्मणां विनाशे सति स्थुलशरीरं परित्यज्य जीवः स्वकीयस्य रूपस्य प्रत्यक्षनुभुतिं भजते। अन्ततः तत्त्वज्ञानेन ब्रह्मसाक्षात्कारेण च जीवो मुक्तिं लभते।

## संदर्भ संकेतः

[1] क) उपनिषद् (स्त्री) उपनिषदति प्राप्नोति ब्रह्मात्मभावोऽनया–उप सद्–क्विप्।
ब्रह्मविद्यां तत्प्रतिपादके वेदशिरोभागे वेदान्ते च।
वाचस्पत्यम् वॉल॰ 2, राष्ट्रियसंस्कृतसंस्थानम् नई दिल्ली 110058

ख) सद्धातोः विशरण–गति–अवसादनरूपार्थत्रयस्य निरूपणं शङ्कराचार्यस्य कठोपनिषदः भाष्य एव विहितम्–अविद्यादेः संसारबीजस्य विशरणाद्–विनाशनाद्कृकृकृकृपरं ब्रह्म वा गमयतीति ब्रह्मगमयितृत्वेन योगाद्, गर्भवास जन्म–जराद्युपद्रववृन्दस्य लोकान्तरे पौनः पुन्येन प्रवृत्तस्य अवसादयितृत्वेन वा ब्रह्मविद्योपनिषत्। – कठ॰ शङ्करकृतभाष्यम्।

2 मुक्तिकोपनिषद 1.1.5

[3] मुक्तिकोपनिषद् श्लोक 30–39

[4] स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः, श्रोत्रमयः पृथ्वीमय आपोमयो वायुमय आकाशमयस्तेजोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयः

— बृहदारण्यकोपनिषद् 4.4.5

[5] य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ।— छान्दोग्योपनिषद् 8.7.4

[6] छान्दोग्योपनिषद् 3.16

[7] आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चनमिषत् ।
स ईक्षत लोकान्नु सृजा इति। — ऐतरेयोपनिषद् 1.1.1.

[8] वेदान्तसार, 11.

[9] यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम्। मुण्डकोपनिषद् 1.1.6

[10] अतः परं ब्रह्म सदद्वितीयस्य विशुद्धविज्ञानघनं निरञ्जनम् ।
प्रशान्तमाद्यन्तविहीनमक्रियं निरन्तरानन्दरसस्वरूपम् ।— विवेकचूडामणिः ।

[11] तदेव

[12] छान्दोग्योपनिषद

[13] स॰ सव॰ यथा अग्नेः क्षुद्रा विस्फुलिङ्गाः व्युच्चरान्ति एवमेवास्मादात्मनः (ब्रह्मणः)
सर्वे लोकाः देवा सर्वाणि भूतानि व्युच्चरन्ति। — बृ॰ आ॰ 2.1.20

[14] एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तारत्मा।। श्वेताश्वतरोपनिषद्।

[15] स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते न ह अस्य उदग्रहणाय इव स्याद् यतो यतस्त्वाददीत लवणमेवैवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति इति अरे ब्रवीमि इति होवाच याज्ञवल्क्यः।। बृ॰ आ॰ 2.4.12

[16] आत्मानं रथिनं विद्धि शरीरं रथमेव तु बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।
इन्द्रियाणि हयान्याहु र्विषयांस्तेषु गोचरान् आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।।

— कठोपनिषत् 1.3.3—4

[17] यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः। स तु तव्यदमाजोति यस्माद्भूयो न जायते। तदेव, 1.3.8

[18] कठ॰ 1.2.23

[19] इह चेदवेदीदयं सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।
भुतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमष्ता भवन्ति।। — केनोपनिषत्, 2.5.

[20] छान्दोग्योपनिषद् 6.8.7.

[21] बृ॰ उ॰1.4.10

[22] तदेव, 1.5.19

[23] तदेव, 3.7.

[24] तै॰ उ॰, 2.8.1

[25] तदेव 3.2.8

[26] तदेव 2.8.1

[27] एतरेय॰ ब्रा॰, 5.3

[28] तै॰ उ॰, 2.1.1

[29] ऐत॰ उ॰ 3.13

[30] छा॰ उ॰ 31.19.1

[31] तदेव 6.2.1

[32] एतरेय॰ ब्रा॰, 5.1

[33] बृ॰ उ॰1.4.10 [34] तदेव 2.5.19

[35] छा॰ उ॰ 2.2.7 [36] मुण्डकोपनिषद्, 3.1.5

[37] आत्मा वा अरे दृष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।
मैत्रेय्यादमनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञनेनेदं सर्वं विदितम्।। बृहदारण्यकोपनिषद् 2.4.5

[38]क) इदं वाव तत् ज्येष्ठाय पुत्राय पिता बह्म प्रब्रूयात्,
प्राणाध्याय वान्तेवसिने, नान्यस्मै कस्मैचनकृकृकृकृ। –छा॰ उ॰ 3.11.5–6

ख) अपि य एनं शुष्के स्थाणौ निषिञ्चेत्, जायेरन् शाखाः,
प्ररोहेयुः पलाशानि इति तं एतं नापुत्राय वानन्तेवासिनो वा ब्रुयात्।। –बृहदारण्यक–6.3.12

ग) वेदान्ते परं गुह्यं पुराकालो प्रचोदितम्।
ना प्रशान्ताय दातव्यं नापुत्रायशिष्याय वा पुनः।। – शवे॰ उ॰ 6.22

घ) तदेतत् सत्यं ऋषिराङ्गिरा पुरोवाच। नैतदचीर्णब्रतोऽधीते।। – मु॰ उ॰ 3.3.2.11

ङ) एतद् गुह्यतमं नापुत्राय नाशिष्याय नाशान्ताय कीर्तयेत् इति, अनन्य– भक्ताय सर्वगुणसम्पन्नाय दद्यात्।। मैत्रायण्युपनिषद्– 6.29 च) शान्तोदान्तः। बृ॰ उ॰ 4.4.22

[39] उपदेशसाहस्री, 324.16.72 [40] श्वेताश्वतरोपनिषद्, 3.8

[41] पञ्चदशी॰ चित्रदीप प्रकरणम्, 210 [42] ईशावास्योपनिषद्, 11

[43] यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हर्षदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समुश्नुते।। – कठोपनिषद्, 2.3.14

[44] मुण्डकोपनिषद्, 2.2.8

[45] स यो हवै तत्परमं ब्रह्मवेद ब्रह्मैव भवति नाऽस्योऽब्रह्मवित्कुले भवति।
तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति।। – तदेव 3.2.9

[46] श्वेताश्वतरोपनिषद्,. 4.6. [47] ईशाावास्योपनिषद् 2.

[48] तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः।। – गीता 3.19.

[49] तस्माद् वा एतस्माद् आत्मन आकाशः सम्भूतः। आकाशाद् वायुः। वायोरग्निः। अग्नेरापः।
अद्म्यः पृथिवी। पृथ्व्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष पुरूषोऽन्नरसमय।
– तैत्तिरीयोपनिषद् 2.1.1.

[50] तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत। तत्तेज ऐक्षत बहुस्यां बहुस्यां प्रजायेयेति तदपोऽसृजत।
तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते।।
– छान्दोग्योपनिषद्, 6.2.3.

[51] बृहदारण्यकोपनिषद्, 6.2.1–3; 6.3.1–6. [52] बृहदारण्यकोपनिषद्, 2.4. 1–4.

[53] ईशावास्योपनिषद् 6.

[54] यथाकारी यथाचारी तथा भवति, साधुकारी साधुर्भवति, पापकारी पापो भवति, पुण्यः पुण्येन कर्माणा भवति पापः पापेन। अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति, तत् कर्तुर्भवति, यत्कर्तु भवति तत्कर्म कुरुते, यत्कर्म कुरुते तदभिसंपद्यते। –बृहदारण्यकोपनिषद्, 4.4.5.

[55] मुक्तिकोपनिषद् ।

[56] It has been the solar of my life and will be the solace of my death.

# शास्त्राणां सिद्धान्तिकपक्षाः

डॉ. पारस शास्त्री
असिस्टेंट प्रोफेसर
राजकीयमहाविद्यालयः सुन्दरबनी

*वेद वेदाङ्ग सहितानां संस्कृत शास्त्राणां सम्यग्ज्ञानमवाप्तुं व्याकरणमेव प्रतुखं साधनं भवतीति निश्चियः*

**शिक्षाकल्पोऽथ व्याकरणं निरुक्तं छन्दसां च यः।**

**ज्योतिषामानयनं चैव वेदांगानि षडैव तु॥**[1]

*पाणिनीयशिक्षायामुक्तम् :–*

**छन्दः पादौ तु वेदस्य हस्तोकल्पोऽथ पठ्यते। ज्योतिषामायनं चक्षुः निरुक्तं श्रोत्रमुच्यते॥**

**शिक्षाप्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् सङ्गमधीत्यैव ब्रह्मलोके महीयते॥**[2]

*अर्थात् छन्दः वेदस्य पादौ स्तः, हस्तो कल्पः उच्यते। वेदस्य नेत्रं ज्योतिषशास्त्रं, वर्णं निरुक्तं, प्राणं शिक्षा, व्याकरणञ्च मुख्यमुच्यते। अतः अंगैः सह वेदानामध्ययनं कृतवा अध्येता ब्रह्मलोकं गच्छति। श्री आर.के. मुकर्जी महोदयेनापि वेदांगानामुल्लेखः कृतः। प्रस्तुताध्याये वेदांगानि क्रमशः अधोक्रमेण विविच्यन्ते :–*

| | | | |
|---|---|---|---|
| (1) | शिक्षा | (2) | कल्पः |
| (3) | व्याकरणम् | (4) | निरुक्तम् |
| (5) | छन्दः | (6) | ज्यौतिषम् |

**शिक्षा :–**

*अस्मिन् उच्चारणस्य प्रक्रियाः विशेषताश्च प्रदर्शिताः। वेदांगेषु शिक्षायाः अत्यधिकं महत्त्वं वर्तते। पाणिनीयशिक्षायामुक्तम् :–*

**“शिक्षा प्राणं तु वेदस्य”** [3]

*अर्थात् शिक्षा वेदस्य नासिकास्ति। शिक्षा – सा विद्या यस्यां वर्णस्वरादीनामुच्चारणस्य प्रक्रिया प्रकटिता*[4]*।*

**“वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा”** [5]

*अर्थात् यया वर्णस्वरादीनामुच्चारणप्रकारः उपदिशते सा शिक्षा भवति। तैत्तिरीयोपनिषदि द्वितीयानुवाक्प्रारम्भे कथितम् :–*

**“शिक्षां व्याख्यास्यामः।**

**वर्णः स्वरः। मात्रा बलम्॥**

**साम सन्तानः। इत्युक्तः शिक्षाध्यायः॥”**[6]

*अर्थात् वयं शिक्षायाः वर्णनं करिष्यामः। वर्ण–स्वर–मात्रा–प्रयत्नवर्णानां समेकीकृत्य उच्चारण गायनं रीतिसन्धिश्च। इत्थं वेदस्योच्चारणस्य शिक्षाया अध्यायः वर्णितः।*

*उपर्युक्तमन्त्रस्याभिप्रायोऽयं यत् उपनिषत्कर्तृभिः शिक्षायाः षडंगानि स्वीकृतानि*[7] *:–*

**वर्णस्वरमात्राबलसामसन्तानश्च**

**वर्णः** — *वर्णेन अक्षरः इंगितः। पाणिनिना वर्णानां संख्या त्रिषष्टिश्चतुष्षटिर्वा निर्धारिता।*

**स्वरः** — *स्वरः त्रिविधाः – उदात्तः अनुदात्तः स्वरितश्च।*

*उदात्तः – 'उच्चैरुदातः' अर्थात् उच्चस्वरैः य उच्चरितः सः उदात्तः।*

*अनुदात्तः– 'समाहारः स्वरितः' अर्थात् मध्यमस्वरैः उच्चरितवर्णः स्वरितो भवति।*

**मात्राः** — *मात्रायाः अभिप्रायः स्वराामुच्चारणे कालस्य परिमाणं भवति। मात्राः त्रिविधाः भवन्ति – ह्रस्वदीर्घप्लुताश्च[8]।*

*मात्रायाः उच्चारणसमयः ह्रस्वः, मात्रयोः उचचरितसमयः दीर्घः मात्राणामुच्चारणसमयश्च प्लुतसंज्ञकः भवति।*

**बलम्** — *बलम् द्विप्रकारकं भवति। स्थानं प्रयत्नश्च। मुखस्य यस्मात् स्थानात् यस्य वर्णस्योच्चारां भवति तत्तस्य स्थानमुच्यते। इमानि स्थानानि अष्टविधानि। वर्णस्योच्चारणसमये मुखेन यः प्रयासः भवति सः प्रयत्नः इत्युच्यते। अयं द्विविधः–बाह्याभ्यन्तरश्च। बाह्यप्रयत्ना एकादशधाः–विवार–संवार–श्वास–नाद– घोषाघोष– अल्पप्राण– महाप्राण–उदात्त–अनुदात्त–स्वरितश्च। आभ्यन्तर–प्रयत्नः चतुर्विधः– स्पृष्ट–ईषत्स्पृष्ट–विवृत–संवृतश्च[9] भेदात्।*

**साम**— *उचितप्रकारेण निर्दोषोच्चारणं साम अस्ति।[10]*

*पाणिनीयशिक्षानुसारेण ''निर्दोषोच्चरणे निम्नषड्गुणाः सन्ति–*

**'माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः।**
**धैर्यं लयसमर्थञ्च षडेते पाठकाः गुणाः॥**

*माधुर्यम् अक्षराणां सुस्पष्टम् उच्चारणं, पदविच्छेदनं सुस्वरेण अध्ययन धैर्यलयाभ्याञ्च पठनं एते षड्गुणाः भवन्ति।*

**सन्तानः**— **पदेषु सन्निधिः सन्धिः सम्यक् प्रकारेण आयोजनम्।[11]**

*उपर्युक्तविवेचनेन प्रतीयते यत् उपनिषत्कालीनशिक्षायां वेदमन्त्राणां सुस्पष्टोच्चारणाय शिक्षा वेदांगस्य महत्त्वपूर्णस्थानमासीत्। अद्यत्वे इमां 'फोनेटिक्स' कथ्यते।*

*वेदः श्रुतिरपि कथ्यते। गुरुजनाः यथा वेदमन्त्रान् उच्चारयन्ति शिष्यैरपि तथैव कर्त्तव्यम्। अशुद्धोच्चारणेन मन्त्रस्यार्थोऽपि अशुद्धो भवति। यतो हि उच्चारणभेदे अर्थपरिवर्तनं भवति।[12] अतः कस्य वर्णस्य स्वरस्य च उच्चारणं कथं कर्त्तव्यमिति अयमेव विषयबोधः अस्य शास्त्रस्य प्रयोजनम् आसीत्।*

**कल्पशास्म् :–**

कल्प्यते यागादि प्रयोगोऽत्रेति व्युत्पतिबलात् कल्पशब्दस्य वेदांगत्वप्रतिपादकत्वम् युक्तम्[13]।

*कल्पस्य अतिमहत्त्वं वर्तते। कल्पस्यार्थः – विधिः नियमः–न्यायः कर्म आदेशश्च। सूत्रशब्दस्यार्थः संक्षेपः। येषु ग्रन्थेषु वैदिकविधि नियमादिकं संक्षेपेण कथितं, ते कल्पसूत्रग्रन्थाः सन्ति[14]। कल्पं कल्पसूत्रमपि कथ्यते।कल्पसूत्रेषु वैदिक–कर्मकाण्ड–यज्ञविधि–नियमादीनां क्रमबद्ध–विवेचनं कृतम्। अस्मात्परं एषु आर्याणां दैनिकजीवनस्य विधिः[15]।*

*विधानकर्तव्यानुष्ठानादीनां सामाजिकराजनैतिकपरम्पराणा व्यक्तिगत– कर्तव्यानाञ्च निर्देशोऽस्ति[16]। वेदांगेषु कल्पशास्त्रस्य उल्लेखः अपि अस्ति[17]। मुण्डकोपनिषदि अपराया विद्यायाः चर्चा क्रमे कल्प–शब्द आगच्छति। पाणिनीयशिक्षायामपि कथितम् :–*

*''हस्तः कल्पोऽथ पठ्यते''।[18] अर्थात् अयं वेदस्य करोऽस्ति। कल्पस्तु– आश्वलायन–आपस्तंभ–द्राह्यथायण–शाकटायनादि सूत्रम्। कल्पसूत्रग्रन्थाः सामान्यतः त्रिविधाः सन्ति :–*

*श्रौतसूत्रं गृह्यसूत्रं धर्मसूत्रञ्च। चतुर्थं शुल्वसूत्रमपि वर्तते। विद्वद्भिः शुल्च सूत्रमपि कल्पसूत्रेषु मन्यते।[19] इत्थं उपनिषत्कालीनशिक्षायां कल्पसूत्राणां पठनपाठनस्यापि विधानमासीत्।*

**व्याकरणम् :**

*व्याकरणं षड्वेदांगेष्वेकमस्ति। वेदानामर्थज्ञानाय व्याकरणस्य ज्ञानमा– वश्यकम्। पाणिनीयशिक्षामनुसृत्य... ''मुखं व्याकरणं स्मृतम्। अर्थात् व्याकरणं वेदस्य मुख्यं वर्तते[20]। व्याकरणशब्दस्यार्थः यथा :*

**"व्याक्रियन्ते शब्दाः अनेन इति व्याकरणम्"[3]**

*येन शब्दानां व्युत्पत्तिजनकव्याख्यानं भवति तत् व्याकरणम्। व्याकरणस्य प्रमुखोद्देश्यं शब्दानां व्युत्पत्तिं विधाय तेषु प्रकृतिप्रत्यययोः अन्वेषणं कृत्वा तेषामर्थनिर्धारणमस्ति[21]।*

*व्याकरणशास्त्रस्य प्रादुर्भाव ऋग्वैदिककालतः एव अभवत्। ऋग्वेदे कथितं यत् यः व्याकरणं न जानाति सः वर्णान् पश्यन्नपि न पश्यति श्रृण्वन्नपि न श्रृणोति[22]। ऋग्वेदे उक्तम् :–*

**चत्वारो श्रृंगाः त्रयो अस्य पादा द्वे शीर्ष सप्तहस्तास्रो अस्य।**

**त्रिधा बद्धोवृषभो रोरवीति महादेवो मर्त्यां आविवेश।[23]**

*अर्थात् व्याकरणरूपवृषभस्य चत्वारः श्रृंगा सन्ति– नाम आध्यातः उपसर्गः निपातश्च, त्रयः पादाः सन्ति – भूतभविष्यद्वर्तमानाश्च। द्वेशीर्षे सुप्तिङन्तम् सप्तकराः – प्रथमारभ्यसप्तपर्यन्तं विभक्तयः। अयं त्रिधाबद्धः – त्रिभिऽर्बद्धो अयम्। अनेन व्याकरण–रूपमहादेवेन मानवेषु प्रवेशः कृतः। व्याकरणस्य क्रमबद्धरूपं पाणिनीयाष्टाध्यायाम् अस्ति।[24] व्याकरणस्य प्रयोजनं वेदार्थज्ञानमस्ति[25]। महर्षिपातञ्जलिना व्याकरणस्य अध्ययनार्थं पञ्चप्रयोजनानि प्रदर्शितानि :–*

**"रक्षोहागमलध्वसंदेहाः"**

**रक्षणम्** *– वेदानां रक्षार्थं व्याकरणमध्येतव्यम्। भाषां लोपागमवर्णविका– रादीनां ज्ञाता एव रक्षयितुं समर्थो भवति।*

ऊह – *'ऊह' शब्दस्यार्थ :– नवीनपदानां संकल्पः, वेदमन्त्रा सर्वेषु लिंगेषु नोक्ताः, न च सर्वासु विभक्तिसु। यज्ञानामावश्यकतानुसारेण व्याकरणज्ञः एव तेषां कल्पनां कर्तुं समर्था भवति।*

**आगम :–** *ब्राह्मणः निष्कामनयैव षडांगसहितवेदान् पठेत्। षडंमेषु व्याकरणं प्रमुखं वर्तते।*

**लघु :–** *लाघवार्थमपि व्याकरणस्याध्ययनं कर्त्तव्यम्। ब्राह्मणानां कृते शब्दज्ञानमावश्यकम्। व्याकरणमेव तधूपायः येन शब्दाः अवगभ्यन्ते।*

**असन्देह :–** *शंकायाः निवृत्यर्थमपि व्याकरणस्य अध्ययनमनिवार्यम्। छान्दोग्योपनिषदि व्याकरणम् 'वेदानां वेदः उक्तम्'।*

**"व्याकरणेन हि पदादिविभागशः ऋग्वेदादयो ज्ञायन्ते"[26]**

*शंकराचार्यमतानुसारेण चतुर्ण्णां वेदानां महाभारतं सम्मेल्य पंचवेदानां ज्ञान व्याकरणेनैव भवति। अतः वेदानां वेद– अस्यार्थेण व्याकरणाभिप्रेतम्। यतो हि पदज्ञानं व्याकरणेन एव भवति। अतः वेदमवगन्तुं व्याकरणस्याध्ययनं भवति स्म[27]।*

*इत्थं औपनिषत्काले पाठ्यक्रमे व्याकरणस्य अध्ययमपि भवति। स्म। यतो हि अस्याध्यनं विना व्याख्यानस्य अर्थञ्च अवगमनमतिदुष्करं आसीत्।*

**निरुक्तम् :-**

*निरुक्तमपि वेदांगेष्वेकमस्ति। पाणिनीयशिक्षामप्युक्तम् – ''निरुक्तं श्रोत्रमुच्यते''[28]। अर्थात् निरुक्तं वेदस्य श्रोत्रं कथ्यते। अस्योल्लेखः मुण्डकोपनिषदि अपराविद्यायाः प्रसंगे विद्यते[29]।*

**"निषण्टुनिरुक्तञ्च वैदिककोषरूपं वेदपुरुषस्य श्रोत्रस्थानीयमस्ति"।**

*निरुक्तं कस्यचित् ग्रन्थविशेषस्य नाम नास्ति, अपितु विषयोऽस्ति। यथा – शिक्षाकल्पादीनाधृत्य अनेके ग्रन्थाः लिखिताः सन्ति तथैव निरुक्तमपि शिक्षादि–सदृशः एकः विषयः अस्ति यमाधृत्यः प्राचीनकालतः एव अनेके ग्रन्थाः विरचिताः सन्ति[30]। निरुक्तस्य मुख्यं प्रयोजनं शब्दानां निरुक्तिः (व्युत्पत्तिः) अथ च तच्छब्दस्यार्थनिरूपणं च वर्तते। इत्थं वैदिकशब्दानामर्थपरिज्ञानाय निरुक्तं सर्वप्रधनम् साधनं मन्यते[31]।*

*व्याकरणशास्त्रेण शब्दानां ज्ञानं भवति। कल्पैश्च मन्त्रस्य विनियोग–विषयः ज्ञायते परम् अर्थस्य समुचितं ज्ञानं निरुक्तेनैव भवति[32]। अर्थावबोधे निरपेक्षतया :–*

**"परजातं यत्र उक्तं तद् निरुक्तम्"[33]**

*अर्थात् अर्थपरिज्ञानाय स्वतन्त्ररूपेण यत्र पदानां संग्रहः क्रियते तत् निरुक्तमस्ति[34]।*

*निरुक्तव्याकरणयोः सामीप्यसम्बन्धोऽस्ति। द्वयोः समानमेव प्रयोजनमस्ति। परन्तु किञ्चदन्तरमप्यस्ति, व्याकरणस्य मुख्यं प्रयोजनं शब्द–रचनायाः ज्ञानप्रदानं वर्तते। अनेन ज्ञानेन तेषामर्थबोधोऽपि भवति[35]।*

*निरुक्तस्य मुख्यं प्रयोजनं तु शब्दानां व्युत्पत्ति विधाय तेषामर्थप्रदर्शनमस्ति[36]......।*

*सर्वे शब्दाः धातुजाः इति निरुक्ताभिमतः सिद्धान्तः। अर्थात् सर्वेषां शब्दानाम् निष्पत्तिः धातोः प्रत्ययस्य च योगेन भवति। उपनिषत्काले निरुक्तस्य उपदेयतां अवलोकयैव षडंगेषु अन्यतमं अंगरूपणम् स्वीकृत्य अस्याध्ययनमध्यापनञ्च भवति स्म। अस्य ज्ञानमन्तरा औपनिषदिकमन्त्राणां ज्ञानं न भवितुं शक्यते। यास्कः कथयति :–*

**वर्णागमो वर्णविषर्ययश्च द्वौ चापरो वर्णविकारनाशौ।**

**धातोस्तदर्थातिशयेन योगः यदुच्यते पञ्चविधं निरुक्तम्[36]॥**

*अर्थात् निरुक्तस्य पञ्चविषयाः सन्ति – वर्णानामागमः, वर्णविषयर्यः, वर्णविकारः, वर्णलोपः एकैकस्य शब्दार्थस्य धातुनां अर्थेण च सह सम्बन्धः।*

*अत एव उपनिषत्कालिकशिक्षाक्रमे स्वीकृते पाठ्यक्रमे निरुक्तस्य महत्त्वपूर्णं स्थानमासीत्।*

**छन्दस् शास्त्रम् :–**

*उपनिषत्काले वेदांगरूपस्य छन्दः शास्त्रस्यापि अध्ययनाध्यापनं भवति स्म। उपनिषदां मन्त्राः गेयाः सन्ति। गायत्र्यनुष्ट्बादीनि छन्दासिं उपनिषत्सु अवलोकयन्ते। छन्दोऽपि वेदांगेष्वेकतमाऽस्ति[1]। वेदमन्त्राणां शुद्धपाठाय अर्थज्ञानाय च छन्दसां ज्ञानम् अनिवार्यम्। छन्दसां ज्ञानं विना वेदमन्त्राणां शुद्धोच्चारणं न वर्तुं शक्यते। वेदानामधिकांशः भागः छन्दोबद्धोऽस्ति। ऋग्सामयोः सर्वे मन्त्राः छन्दःसुनिबद्धाः सन्ति। यजुर्वेदार्थवविदयोः च कश्चित् एव भागः गद्यमय अधिकांशतः छन्दोबद्धोऽस्ति। एषां मन्त्राणां तदैव शुद्धोच्चारणं कर्तुं शक्यते यदा छन्दसां समुचितं ज्ञानं भवेत्[37]।*

*यास्केन छन्दः शब्दस्य व्युत्पत्तिः 'छद्–आवरणे' इत्यस्मात् धातोः कृता :–*

**"मन्त्रा मननात् छन्दांसि छादनात्"** [38]

*पाणिनिना वेदः इत्यस्मिन् अर्थे 'छन्दस्' शब्दस्य प्रयोगः कृतः। तेन वैदिकभाषायाः कृते विभिन्नस्थलेषु "बहुलं छन्दसि" सूत्रं लिखितम्*[39]*। छन्दसः व्युत्पत्ति :-*

**"छन्दयति, पृणोति रोचते इति छन्दः"**

*अथवा "छन्दयति आह्लादयति छन्द्यते अनेन वा इति छन्दः"*[40]

**मुण्डकोपनिषद अपरा विद्यायाः उल्लेखक्रमे 'छन्दः' शब्दस्य निरूपणं कृतम्**[41]**।**

*छन्दसः विषयोऽयं प्रातिशाख्येष्वप्यागच्छति। अस्य शास्त्रस्य महत्त्वपूर्णं ग्रन्थं छन्दः-सूत्रम् 'आचार्यपिंगलनिर्मितवान्। पिंगलस्य छन्दसूत्रं अति प्राचीनं प्रतीयते। परं न अस्मिन् कोऽपि सन्देह यत् ग्रन्थोऽयं प्राचीनछन्दःशास्त्रानुसारं लिखितः*[42]*।*

**ज्योतिषशास्त्रम् :-**

*शास्त्रमिदमपि वेदानां षडंगेषु एकम्। "ज्यौतिषामायन्" इति कथनम् वेदस्य चक्षुरहित*[1]*। अस्योल्लेखो मुण्डकोपनिषदि लभ्यते*[2]*। तत्रोपनिषदि गणितमुक्तम्। अंकानां जीवने महत्त्वं परिज्ञाय अंकविद्यायाः अध्ययनं तस्मिन् काले भवति स्म। इत्थम् उपनिषत्काले पाठ्यक्रमे ज्योतिषशास्त्रमपि अन्यतमाध्ययनविषयः अभूत्, इति स्पष्टम्।*

*नारदः सनतकुमारं कथयति – यत् सः अन्यविद्याभिः सह नक्षत्रविद्यायाः ज्ञानमपि धारयति। नक्षत्रविद्या ज्योतिषशास्त्रमेवास्ति*[3]*। अस्य शास्त्रस्य भारतदेशे एव विकासोऽभवत्। आचार्य वशिष्ठः, आर्यभट्टः वराहमिहिरादयश्च अनेके आचार्याः अस्य शास्त्रस्योन्नायकाः अभवन्*[43]*।*

*श्रीमुकर्जी महोदयेनापि प्राचीनभारतीयशिक्षाक्रमे ज्योतिषविद्यायाः अध्ययनाध्यापनस्योल्लेखः कृतः*[44]*। उपनिषत्काले ज्योतिषशास्त्रस्य अध्ययनमध्यापनमपि भवति स्म।*

**साहित्यम् :-**

*उपनिषत्काले वाक्परम्परयैव अस्य साहित्यशास्त्रस्य संवर्धनं भवति स्म। वाक्यतत्त्वस्य महत्त्वमुपनिषत्सु विभिन्नप्रकारैः वर्णितमस्ति*[4]*।*

*रसस्योल्लेखः ऋग्वेदस्यारम्भकालादेव अभवत् परं तत्र साहित्यिकाधारैः तस्य विवेचनं नासीत्। रसः सुखस्य द्योतकोऽस्ति अतः रस उपनिषत्सु सारभूततत्त्वरूपेण ग्रहीतः*

"रसः सारः चिदानन्दप्रकाशः रसो वै सः तं ह्वायं लब्ध्वा आनंदी भवति॥" [5]

*अनेनोद्धरणेन रसाद आनन्दानुभूतेः निर्देश उपलभ्यते। एष एव आनन्दः रस पदस्य वाचकः*[6]*। साहित्यस्य रसः आनन्दात् व्यतिरिक्तः न भवेत्। अत एव काव्यं रसात्मकं मन्यते। रसः एव प्राणाः सन्ति – प्राणो अंगानां रसः*[7]*। एतादृशस्य रसात्मकस्य साहित्यालंकारविषयस्य व्यवस्थितां चर्चां दृष्ट्वा स्पष्टम् अनुमातुं शक्यते यत् उपनिषत्काले शिक्षाक्रमे अयमपि विषयः पाठ्यक्रमे पाठ्यत्वेन स्वीकृतः भवेत्।*

*अनेन इदं प्रतीयते यत् उपनिषत्काले एव अन्याभिः विद्याभिः सह एकायनम् (नीतिशास्त्रम्) अपि, अध्ययनाध्यापने प्रचलतिमभवत्। एतन्नीतिशास्त्रम् राजनीतिरूपमासीदिति*

*अनुमीयते। पुरा राजनीतिः आचारशास्त्रात् पृथग् भूतम् शास्त्रं नासीत्। तदानीम् राजानः आचारम् व्यवहारं च अनेनैव शास्त्रेण ज्ञातुं प्रभवन्ति स्म।*[45]

## संदर्भ संकेताः


1. वैदिक साहित्यस्य इतिहास, पृ. 216.
2. पाणिनीय शिक्षा, पृ. 20
3. पाणिनीय शिक्षा, पृ. 21.
4. वै. सा. का इति., पृ. 228. 5. तदेव.
6. तैत्ति. उप., पृ. 274.
7. वै. सा. विमर्शः पृ. 230. 8. तदेव, पृ. 230.
9. वै. सा. विमर्श, पृ. 230.
10. तदेव, पृ. 230.
11. तदेव, पृ. 231.
12. याज्ञवल्कीय शिक्षा पाणिनीय शिक्षा
13. ऋगाथर्वसूक्त संग्रह
14. वैदिकसाहित्यस्येतिहास, पृ. 231. 15. तदेव, पृ. 232.
16. तदेव.
17. मुण्ड. उप., पृ. 83.
18. पा. शि., पृ. 21.
19. वैदिक साहित्यस्येतिहास, पृ. 231.
20. पाणिनीय शिक्षा, पृ. 21.
21. लघुसिद्धान्तकौमुदी, भूमिका, पृ. 3.
22. वैदिकसाहित्यस्येतिहास, पृ. 246.
23. ऋग्वेद, 10/71/4. 24. तदेव, 4/58/6.
25. वैदिकसाहित्यस्येतिहास, पृ. 246. 26. तदेव, पृ. 247.
27. छान्द. उप., शां. भा., 7/1/2.
28. उप. का. समा. और त., पृ. 243.
29. पाणिनीय शिक्षा, पृ. 22.
30. मुण्ड. उप., पृ. 82
31. वैदिकसाहित्येतिहास, पृ. 251.
32. वैदिकसाहित्यविमर्श, पृ. 252. 33. तदेव।
34. वैदिकसाहित्य विमर्श., पृ. 252.
35. तदेव, पृ. 252.
36. पाणिनि शिक्षा, पृ. 21.
37. वैदिक साहित्य का इतिहास, पृ. 258.
38. (अ) तदेव, पृ. 258.उ (आ) निरुक्त, 7/19.
38. पाणिनि शिक्षा, पृ. 25.
39. वैदिक साहित्य का इतिहास, पृ. 258.
40. मुण्ड. उप., पृ. 82.
४1. भारतीय संस्कृति और उसका इतिहास — सत्यकेतु विद्यालंकार, पृ. 106. (प्रका. — सरस्वती सदन, 7 यू. ए. जवाहरनगर, दिल्ली-7) सन् – 1974.
42. मुण्ड. उप., पृ. 82.
43. छान्द. उप., शां. भा., 7/1/2, पृ. 715.
44. भारतीय संस्कृति और उसका इतिहास, पृ. 312.
45. एन एण्शीएण्ट इण्डियन एजूकेशन, डॉ. आर.के. मुकर्जी, पृ.
46. छान्द. उप., 7/1/2.

# संस्कृत वाङ्मये अर्थव्यवस्था

डॉ. दीपाली खजूरिया
जम्मू

संस्कृत वाङ्मयम् अतिविशालं वर्तते। सुविपुले साहित्येऽस्मिन् अर्थव्यवस्थायाः विषये विस्तरेण चर्चापि प्राप्यते। अर्थव्यवस्थाशब्दे प्रयुक्तार्थशब्दस्य एकाधिकार्थाः भवन्ति। यथा प्रयोजनम् अभिप्रायः विषयः व्यापारः हितं धनं वा। वेदाः न केवलं भारतस्य अपितु विश्वस्यास्य आदिग्रन्थाः। वेदाः खलु सर्वासां विद्यानां सर्वस्य ज्ञानस्य वा मूलभूता इत्यस्मिन् विषये न विवदन्ते मनीषिणः। मानव जीवनस्य परमलक्ष्यभूतं पुरूषार्थ चतुष्टयमपि वेद मन्त्रेषु विस्तरेण प्रतिपादितं वर्तते। धर्म,अर्थ,काममोक्षेषु निखिलं मानव जीवनं समाहितं भवति। इदं तु सुविदितमेवास्ति यदर्थं बिना जीवनं न चलति। अतएव पुरूषार्थ चतुष्टयेऽपि अर्थस्य द्वितीयं स्थानमस्ति। आसीत् कोऽपि समयः यदा जनाः धर्ममोक्षयोः सिद्धयर्थं प्रामुख्ये प्रयतन्ते स्म, परं साम्प्रति के काले अर्थ कामयोरेव प्राधान्यं तत्रापि च अर्थस्य महत्त्वं सर्वैरेव प्रतिदिनमनुभूयते। 'अर्थस्य पुरुषो दासः' सर्वेगुणाः काञ्चनमाश्रयन्ते, यस्यास्ति वितं स नरः कुलिन इत्यादि वचनानि अर्थस्य महत्त्वं प्रतिपादयन्ति। अतएव पुरुषार्थ चतुष्टयेऽपि अर्थस्य द्वितीय स्थानम् अस्ति। वर्तमान समये निखिलेऽपि संसारे अर्थार्जनमेव मानवानां प्रमुखयोद्यमः,अर्थप्राप्यर्थं सत्य असत्ययो धर्म-अधर्मयोः पुण्य पापयोरपि नास्ति चिन्ता। परं अन्यायेन अधर्मेण, अनृजुना वा मार्गेणार्जितं धनं न कदापि सुखं शान्ति न प्रयच्छति। यदि मानवाः श्रुतिप्रतिप्रतिपादितां धनार्जनासरणिमाश्रयेयुः तार्हि सर्वेषामेव कल्याणं भवेत्। कृत्स्नेऽपि संस्कृत वाङ्मये दारिद्रयं सर्वथा निन्द्यं मतम्। महाभारते ध नस्य महत्त्वं वर्णितमस्ति। धनमाहुः परं धर्मः धने सर्वं प्रतिष्ठितम्। कौटिलयेऽर्थशास्त्रेऽपि विहितमस्ति यत् धर्मस्य मूलमर्थः। उक्तं केनापि विदुषा 'दारिद्रयं षष्ठं महापातकम्। वेदे सर्वत्र अर्थ प्राप्तयर्थं एवं विधाः प्रार्थनाः प्राप्यन्ते। 'अग्नै नय सुपथा राये,' वयं स्याम पतयो रयीणाम् इन्द्र श्रेष्ठानि द्रविणानि देहि अस्मासु भद्रा द्रवेणानि धत्त एवं विधेषु मन्त्रेषु भद्रस्य श्रेष्ठस्य, धर्ममार्गेणार्जितस्य धनस्यैव प्रार्थना वर्तते।

वैदिक समाजे कृषका एवं श्रेष्ठत्वं धारयन्ति स्म। आर्यजनाः पृथिवीं प्रति अतिशयं श्रद्धाभावं प्रकटयन्ति। ते पृथिवी 'माता' अति सम्बोधयन्ति। माता पृथिवी महीयम्।[1] "माता भूमिः पुत्रोऽहं पृथिव्याः।।"[2]

वेदेषु अर्थस्य आधार भूतानि तत्त्वानि सन्ति- भूमिः, पशावः, मनुष्याश्च। सर्वम् अर्थतन्त्रं त्रयाधीनम्। भूमि अन्नधान्यादीनामुत्त्पति, खनिज द्रव्याणां प्राप्तिः वृक्षादिगृहनिर्माण साधनानि च भूमिरेव प्रयच्छति अथर्ववेदस्य सुविख्याते भूमिसूक्ते पृथिव्याः सरसातिससं गरिमामण्डितं, हृदयाह्लादी वर्णनं प्राप्यते। 'माताभूमिः पुत्रोऽहं पृथिव्याः' इयं भूमिरस्माकं जननी वयं च अस्याः पृथिव्याः पुत्ररूपाः। भूरियां सर्वेषां भरण पोषण कारयित्री, समेषामैश्वर्याणां धारयित्री, आश्रयप्रदायिनी, प्रतिष्ठादायिनी च वर्तते। विश्वम्भरा वसुधानि प्रतिष्ठा हिरण्यवक्षा जगतोनिवेशनी[3] भूमिसूक्ते भूमिमाता असकृत हिरण्यवक्षा यदेन सम्मानिता। एकस्मिन मन्त्रे कोऽपि देशभक्तः पृथिवी

वन्दनां कुर्वाणः उद्गायति-

शिला भूमिरश्मा पांसुः सा भूमिः संधृता धृता तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः।।[४]

भूरियं नानाविधैश्वर्याणां खनिः। अस्याः गृहासु किं नास्ति? वयं प्रार्थयामो सुमनस्याना पृथिवी माता अस्मान् निखिलानि वसूनि प्रयच्छतु निधिं बिभ्रती बहुधा गुह्य वसु मणिं हिरण्यं पृथिवी ददात्तु मे।

वसूनि नो वसुदा रासमाना देवी दधातु सुमनस्यमाता।।[५]

**पशवः** - अर्थप्राप्तेः अन्यतम आधारोऽस्ति पशुः। वैदिक साहित्ये पशुधनस्य महत्त्वं सर्वत्र जेगीयते। कृष्याधारभूताः पशवः बहुभिः प्रकारैः राष्ट्रस्य समृद्धि वृद्धौ कारणभूता भवन्ति। वेद मन्त्रेषु पशुरक्षायाः प्रार्थना वैदिकऋषीणां पशुप्रेम प्रदर्शयति। यथा-

शं नो द्वियदे शं चतुष्पदे।[६]

प्रिया पदानि पशवो नि पाहि।[७]

मा नो गोषु मा नो अश्वेषु रीरिषः।[८]

यद्यपि सर्वेऽपि पशवः रक्षणीयाः उपयोगिनः समृद्धिप्रदातारश्च भवन्ति, परं गोधनस्य महत्त्वं नूनमप्रतिमम्। वेदे गवां महत्त्वम् अर्चनीयत्वं समृद्धिप्रदायित्वं भूयो भूयः संघोष्यते। पुरकाले गोधनमेव समृद्धिसूचकममन्यत। गोपालनं सर्वोत्कृष्टं कर्म मन्यते स्म, भारतीयैः यथा कृषि राष्ट्रमन्नधान्यान्वितं करोति तथैव गवां बाहुल्यमपि अन्नसमस्यामपाकरोति। गोभिः मानवजाते जीवनं पालितं पोषितञ्च भवति। यथा गवां तथान्येषां पशूनाम् अर्थव्यवस्थायां महत्त्वं निर्विवादमेव।

**उद्योगः** - उद्योगमन्तरा न कोऽपि देशः समृद्धे चरमोत्कर्षतां प्राप्नोति। वैदिक काले भारतीयाः शिल्प विज्ञाने उद्योगादिषु च परमनिपुणाः बभूबुः वेदे आध्यात्मिकज्ञानेन सहैव भौतिक विज्ञानमपि परां कोटिम् आटीकमानम् आसीत्। वेदे नानाविधशिल्पकलापारङ्गता शिल्पिनः का रूपदेव अभिधीयन्ते। न केवलं पुरूषा अपितु नार्योऽपि शिल्प-विधायां निपुणा आसान्। तदानीन्तनाः राजानः शिल्पिनां कृते शिक्षणालयानां स्थापनामकार्षुः। उद्योगकला निपुणा शिल्पिनः शस्त्रास्त्र, वस्त्र, विमान, नौका, गृह, चर्म, हिरण्य, रथादि निर्माणेन निर्मियन्ते स्म। वेद मन्त्रेषु वज्र, तिग्मतेजा, हेति, प्रहेति, धूमाक्षी वज्र, वृधुकर्णी वज्र अश्रुमुखी वज्र, अग्निजिह्व वज्र, धूमशिखा वज्र क्षुर-सृक-पर्व असि-निष्ङ्ग-धनु पिनाक-इषु-भर-बाणवृषप्रभृतीणापं शस्त्राणां वर्णनमुयलभ्यते। यजुर्वेदस्य षोडश त्रिंशद अध्याययो मन्त्रेषु नानाविधशिल्पीनां वर्णनं वैदिक कालीनोद्योगस्य स्वरूपं ज्ञातुं शक्यते।

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमो।[९]

नृत्राय सूतं गीतायशैलूषं मेंधायै रथकारं धैर्य्याय तक्षाणम्। तपसे कैलालं मायायै कर्मारं रूपाय मणिकारं शुभे वपं शरव्याया इषुकारं। हैत्यै धनुष्कारं कमाणे ज्याकारं।।[१०]

बोभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वणिजं।[११]

ऋग्वेदे प्रयुक्तः पूषा सिरि तन्तु ओतु, तसर मयूखादि शब्द। वस्त्रोद्योगस्य स्वरूपं प्रतिपादयन्ति। तदानीन्तने काले वस्त्रवयने स्त्रीणां प्राधान्यमासीत्। ताः वस्त्र निर्माणकलायां परं कौशलमाप्तवत्य आसन्। शतपथ ब्राह्मणोऽस्मिन् विषये निगद्यते- तद्यथा-

एतत्स्त्रीणां कर्म यदूर्णासूत्रम्।[१२] वैदिक संहितासु सूत्रनिर्माण संकेताः स्पष्टरूपेण प्राप्यन्ते। तद्यथा- यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः।[१३]

ऋतस्य तन्तुविर्ततः पवित्र आ......।[१४]

यथा वर्तमान समये कलयन्त्रेषु विविधानि वस्त्राणि निर्मीयन्ते तथैव वैदिक कालेऽपि निर्मीयन्ते स्म। निष्क-रूक्म-मीण-कृशन्-हिरण्य-खादि-प्रतिहस्त-कंकण-स्रज-कुरीर-ओपश। प्रभृतीनां, धातुभामाभूषणानां च प्रयोगेण आभूषण निर्माण कलायाः संकेताः प्राप्यन्ते। वेदमन्त्रेषु प्रयुक्ताः अयस रौप्य सुवर्ण त्रपु सीसं प्रभृतयश्शब्दाः धातुद्योगं प्रतियादयन्ति। यथा-

हिरण्यं च मेऽयश्च में श्यामञ्च में लोहञ्च में सीसञ्च में त्रपुश्च में यज्ञेन कल्पन्ताम्।[१५]

इत्थमेव चर्मोद्योगस्य, कटनिर्माणस्य, भोजनयज्ञादि पात्रनिर्माणस्य, जलयान वायुथान-विद्युद्यानादीनां च वर्णनेन तत्कालीनमुद्योग-गौरवं ज्ञायते। वेदमन्त्रेषु वास्तुकलायाः विविधानि निदर्शनानि मनांसि मोहयन्ति। तत्र गृहाणां गयः कृदरः गर्त्तः, हर्म्यम, अस्तम् परत्यम, दुरोणः नीडम्, दुर्याः, स्वसरणि अमा, दमः, कृत्तिः, योनि, शख्म् वरूथम्, छर्दिः छाया शर्म, अज्यादयोभेदाः प्रतिपादिताः सन्ति।

वैदिककाले धनाढयाः अतिधनाढयाः सामान्याः सर्वविधाः जनाः द्रष्टुं शक्यन्ते। ते च प्रायशः परिश्रमशीलाः उद्योगिनो बभूवुः। यथोक्तं नऋते श्रान्तस्य सख्याय देवाः उद्योगिनं पुरूषसिंहमुपैति लक्ष्मीः इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति यान्ति प्रमादमतन्द्राः। वाणिज्यम प्राचीनकाले यथा कृषिः समुन्नता, पशुपालनं समुन्नतं शिल्व विद्या परिवृढा तथैव वाणिज्यमपि समृद्धमासीत्। प्राचीनाः आर्याः रहस्यमेतद् अज्ञासिषु यद् वाणिज्यमन्तर समृद्धमासीत्। प्राचीनाः आर्याः रहस्यमेतद् अज्ञासिषु यद् वाणिज्यमन्तर अर्थव्यवस्था न सुदृढ़ा भवितुमर्हति। अथर्ववेदस्य तृतीयकाण्डस्य पञ्चदशतमे सूक्ते वाणिज्ययस्य मनोहारी वर्णनं पठित्वा तत्कालीनं वाणिज्यं ज्ञातुं शक्यते। वाणिज्यविकासाय ये ये उपायाः संभवन्ति ते ते सर्वे तत्र वार्णिताः सन्ति। पदार्थविनिमयस्य रमणीये चित्रमेकं विलोक्यताम्

देहि मे ददामि ते निमे धेहि नि ते दधे। निहारं च हरासि मे निहारं निहराणि ते।[१६]

ये जनाः कृषि कर्मणि, पशुपालने, उद्योग वाणिज्यव्यवसाये अन्यस्मिन् कस्मिन्नपि वा अर्थार्जन व्यवहारे निरताः सभभवन् ते सर्वे राज्येन संरक्षिताः बभुवुः।

**करव्यवस्था** - अर्थव्यवस्थायां कराधानं महत्त्वपूर्णं भवति। राज्यं कराधानेन विना यदमेकं न चलितुं शक्नोति। राजा प्रजाभ्यः करग्रहणं कुर्यादित्यस्मिन् विषयेबहवो मन्त्राः दृष्टिपथमायान्ति। यथां।

इन्द्र सोमं पिब ऋतुनाऽत्वा विशन्तीन्दवः। मत्सरासस्तदीकसः।।[१७]

करस्य कृते बलिः शुष्क, पान हति भाग इत्यादी शब्दानां प्रयोगाः मन्त्रेषु दृश्यन्ते। अथर्ववेदस्य मन्त्रे राज्ञे प्रसन्नतया करदानाय जनाः प्रेयन्ते-

करस्यकृते बलिः शुष्क, पान, हवि भाग इत्यादी शब्दानां प्रयोगाः मन्त्रेषु दृश्यन्ते। अथर्ववेदस्य मन्त्रे राज्ञे प्रसन्नतया करदानाय जनाः प्रेयन्ते-

अच्छात्वायन्तु हविनः सजाता अग्निर्दूतो अजिरः संचारतै।
जायाः पुत्राः सुमनसो भवन्तु बहुं बलिं प्रतिपश्यासा उग्रः।।[१८]

कराधानस्यास्य प्रयोजनन्तु प्रज्ञा-पालनं, रञ्जनं, संवर्धनं वा। महर्षि दयानन्दः ऋग्वेदादि भाग्यभूमिकायां विषयेऽस्मिन स्वविचारान एवं प्रकटयामास- राज्ञां प्रजानां राजपुरूषाणाञ्च कर्त्तव्यमिदं यत् ते एवं विधामर्थव्यवस्थां स्वीकूर्युः येन अप्राप्तस्य प्राप्तिः प्राप्तस्य प्रयत्नेन रक्षणं

रक्षितस्य वृद्धिः वृद्धि प्राप्तेन च धनेन वेद विद्यायाः धर्मस्य च प्रसारः छात्राणां वेदमार्गोप देशकानामसमर्थनामनाथञ्च पालनं भवेत्।

वेदभाष्यं कुर्वद्भिः महर्षिवर्यैः वेदमन्त्रण्याख्यायां कर-प्रयोजन मित्थं प्रतिपादितम् 'यः नृपः प्रजाभ्यः करं स्वीकृत्य न पालयति सः राजा दस्युसमो वर्तते। अतएव प्रज्ञा राज्ञे करं प्रयच्छति येन सोऽस्मान् पालयेत, राजा च तएदर्थमेव पालनं करोति येन प्रजा कर दद्यात्।

अथर्ववेदे राजा प्रजाभ्योऽर्जितस्य धनस्य षोडशतमभागग्रहणाय निर्दिष्टोऽस्ति-

यद् राजानो विभजन्त इष्टा पूर्तस्य षोडशं यमस्यामी सभासदः।

अविस्तस्मात् प्रमुञ्चति दत्तः शितिपात स्वधा।[१६]

**यात्रा**- संस्कृतसाहित्ये यात्राव्यापारस्यापि वर्णनं प्राप्यते। ऋग्वेदे[२०] प्राप्यते यत् अश्वमाध्यमेन श्वानमाध्यमेन च स्थलमार्गमवलम्ब्य व्यापारः भवति स्म। ऋग्वेदे[२१] तुग्रनामकस्य राजपुत्रस्य वारद्वयस्य यात्राायाः वर्णनं प्राप्यते।

वैदिक अर्थव्यवस्थायां सन्ति ते केचिद् विलक्षणाः गुणाः येन वर्तमानकालेऽपि तस्याः महत्त्वमक्षुण्णमेव। यदि वयं परिवारेषु समाजे, देशे, विश्वे वा अर्थेन सुखं प्रसारयितुमिच्छामस्तर्हि प्रचारोऽस्या व्यवस्थायास्सुतरामपेक्षते। अस्याः अर्थव्यवस्थायाः वैशिष्ट्यमिदम् व्यागभावना समत्वभावना, प्राणिमात्रे समदृष्टि, मानवकल्याणभावना, सहभोजनम्, अक्षनिन्दा, कृषिप्रशंसा यज्ञीय भावना, दानभावना, भौतिक भावनाभविते वर्तमानयुगे यदि वैदिक अर्थव्यवस्थाया गुणाः स्वीक्रियन्ते तर्हि सर्वस्व जगत कलयाणमेव स्यात् नास्त्यत्र मनागपि संशयावसरः।

संदर्भसंकेताः


१. ऋ० १-६४-१३
२. अथर्व० १२-१-१२
३. अथर्व० १२-१-६
४. अथर्व० १२-१-२६
५. अथर्व० १२-१-४४
६. अथर्व० १४-२-४०
७. ऋ० १-६७-३
८. ऋ० १-११-४८
९. यजु० १६-२७
१०. यजु० ३०-६-७
११. यजु० ३०-१७
१२. शतपथ १२-७.२-१११
१३. ऋग् १०-५७-२
१४. ऋग् ६-७३-६
१५. यजु० १८-१३
१६. यजु० ३-५०
१७. ऋग् १-१५-१
१८. अथर्व० ३-४-३
१९. अथर्व० ३-२९
२०. ऋ० ८-३६-२८
२१. ऋ० १-११६-३

# वास्तुसौख्यस्य परिशीलनं तस्य लेखकस्य विवरणञ्च

शुभ कुमारः
प्रवाचक संस्कृत
राजकीय महाविद्यालयः, कठुआ

भवन–विन्यासः मानवसभ्यतायाः संस्कृतेः च अध्ययने प्रमुखकारणं विधते। स्थापत्यस्य उत्कर्षं मानवसमाजस्य सांस्कृतिकाभिरूचिं वैभवञ्च प्रर्दशयति। भारतवर्षे भवन प्रकल्पनं प्रत्नादेव कालात् परिज्ञातमासीत्। सर्वासु वैदिकसंहितासु अस्य वर्णनं संकेतितमस्ति, किन्तु अथर्ववेदसंहितायां शालासूक्ते विशेषतया स्थापत्यवर्णनं कल्पितमस्ति। स्थापत्यविद्यायाः वीजं अथर्ववेदे विद्यते। अथर्ववेदादुद्भूतं स्थापत्यं वास्तुशास्त्रस्य उपजीव्यं सञ्जातमिति भागवते (3/12/37–39) प्रमाणितं भवति। स्थापत्यविद्यायाः पोषणं ऋषिभिर्विहितम्। मत्स्यपुराणे शिल्पशास्त्रस्य अष्टादश आचार्याः वर्णिताः सन्ति।[1]

आचार्येषु मयविश्वकर्माणौ प्रख्यततरौ स्तः। विश्वकर्मा औदीच्य परम्परायाः मयश्च दाक्षिणात्यपरम्परायाः दीपस्तम्भौ वर्तेते। समराङ्गणसूत्रधारानुसारं प्रभावसोः सूनुः विश्वकर्मा देवगुरोः वृहस्पतेः भागिनेयः, अपराजितपृच्छानुसारञ्च भृगोः भागिनेयः उक्तः। उभौ ऋषी शिल्पशास्त्रस्य उपदेशकौ स्तः। अष्टावसुनां ख्यातिरपि शिल्पज्ञत्वेन प्रथिता। वास्तुशास्त्रं ज्योतिषगणितयोः प्रयोगविज्ञानं वर्तते। स्थापत्यस्याधारभूता पृथिवी सौरमण्डलेन सह सम्बद्धास्ति। सूर्यचन्द्रनक्षत्रादीणां प्रभावः अस्योपरि परिलक्ष्यते। अतएव लोके अस्मिन् वास्तुप्रकल्पनात् प्राक् आयादिविचारः नक्षत्रपरीक्षा लग्नतिथिवारप्रभृतीनां निर्धारणञ्च भवति। एवमष्टाङ्गस्थापत्ये ज्योतिषशास्त्रस्य प्रमुखस्थानं वर्तते। मितिः वास्तुप्रकल्पनस्य भित्तिः अस्ति।

मापनं विना सुष्ठुप्रकल्पमसम्भवमस्ति। कार्ये अस्मिन् गणितशास्त्रस्य प्रयोगो भवति। वास्तुकर्मणि ज्यामितिशास्त्रेण आकृतिप्रकल्पनं भवति। अतः वास्तुशास्त्रस्यापरं सहयोगिशास्त्रं गणितमस्ति। किञ्च देशचयने, भूमिचयने, भूमिपरिक्षीणे शल्यशोधने च वास्तोः सहायकानि भूगोलभूगर्भप्रभृतिशास्त्राणि सन्ति।

**वास्तुसौख्यस्य परिशीलनम्ः –**

वास्तुसौख्यस्य लेखकः श्री टोडरानन्दः अस्ति। टोडरानन्दः आचारसंहितायाः वृहत्कोशः अस्ति यस्य कर्ता राजा टोडरमल्लः शंसितः। श्रीटोडरमल्लः ग्रन्थं ग्रन्थान् व लिखितवान् इत्यस्योल्लेखः इतिहासे न प्राप्यते किन्तु टोडरानन्दग्रन्थस्य सौख्येषु श्री टोडरस्य कर्तृत्वेन उल्लेखो प्राप्यते। यथा वास्तुसौख्ये लिखितम् ''गृहसौख्यं तनोत्येषु श्रीटोडरमहीपतिः''।[2]

ग्रन्थान्ते अपि लिखितमस्ति ''इति श्रीमन्महाराजाधिराज श्री टोडरमल्लविरचिते टोडरानन्दे वास्तुसौख्यं सम्पूर्णम्''।

विद्वज्जनानुसारं विवधिखण्डात्मकः अयं ग्रन्थः विविधैः शास्त्रज्ञैः विद्वद्भिः लिखितो अस्ति। अस्य ज्योतिषभागस्य कर्ता ताजिकनीलकण्ठी ग्रन्थस्य लेखकः श्री नीलकण्ठः वर्तते।[3] अन्यखण्डानां लेखकाः अज्ञातनामा वर्तन्ते।[4] अनेनेदं प्रतीयते यत् टोडरानन्दग्रन्थस्य कारयिता श्रीटोडरामल्लः अस्ति, यः आत्मनः संरक्षकत्वं अस्य प्रणयनं विविधैः विद्वद्भिः कारितवान्।

अयं ग्रन्थः ऊनविंशतिसौख्येषु[5] त्रयोविंशतिसौख्येषु[6] वा प्राप्यते। ते सन्तिसर्गावतारः, कालनिर्णयः, संस्कारः, आचारः, शुद्धनिर्णयः, श्राद्धः, वर्षकृत्यं, व्रतविधिः, प्रतिष्ठाविधिः, पूजा, दानं, शान्तिकं, तैथिकं, विवादः, व्यवहारः, राजनीतिः, प्रायश्चित्तं, कर्मविपाकः, आयुर्वेदश्च।[7] एतेषु सौख्येषु कतिपयसौख्यानि अनूपसंस्कृत पुस्तकालयेसन्ति।[8] एषु सौख्येषु ज्योतिषसौख्यस्यपाठः नास्ति। पिंगरेमहोदयः ज्योतिषसौख्यं तृतीयं सौख्यं स्वीकरोति। अस्य कर्ता नीलकण्ठः अस्ति।

विवाहसौख्यं वास्तुसौख्यं च एतदतिरिक्तं स्तः। पिंगरेमहोदयानुसारं सम्भवतः परवर्तिसौख्ये टोडरानन्दस्य मूलयोजनायां न स्तः अपितु अनयोः टोडरानन्दे सन्निवेशः कालान्तरे जातः।[9] टोडरानन्दस्य रचनाकालः 1565–1589 खिष्टाब्दयोः मध्येवर्तते। ज्योतिषखण्डस्य रचनाकालः 1572 खिष्टाब्दो अनुमितो वर्तते।[10] वास्तुसौख्यस्यापि कालः ज्योतिषखण्डस्य कालो भवेदिति अनुमीयते।

**वास्तुसौख्यस्य मातृकाः विवरणम् –** वास्तुसौख्यस्य तिस्रो मातृकाः उपलब्धाः सन्ति, तासां परिचयः क, ख, ग इति रूपेण प्रस्तूयते।

**'क' मातृका** – कर्गदपत्रे लिखितेयं मातृका गंगानाथ झा विद्यापीठस्य संग्रहालये वर्तते। इयं देवनागरीलिपि वृद्धा त्रिंशत् पृष्ठात्मका च अस्ति।

**'ख' मातृका** – 1734 वैक्रमे संवत्सरे कर्गदपत्रे लिखिता देवनगरीलिपिबद्धेयं मातृका सरस्वतीभवन पुस्तकालये वाराणस्यां प्राप्यते। इयं नातिसुपाठ्या अपूर्णा चास्ति।

**'ग' मातृका** – इयमपि मातृका देवनागरीलिपि बद्धा कर्गपत्रदपत्रे च लिखितास्ति। इयं पूर्णा सुपाठ्या अस्ति। 1886 संवत्सरे लिखितास्ति। इयं मातृका सरस्वती भवन पुस्तकालये वाराणस्यां च प्राप्यते। अस्याः लेखकः नन्दराम उपाध्या अस्ति।

## ग्रन्यकर्तुः श्री टोडरामल्लस्य परिचयः –

सप्तसिन्धुप्रदेशः अविस्मरणीयानां विभूतीनां जननी वर्तते। एतद्देशप्रसूताः प्रथितयशस्काः जनाः जननीं जन्मभूमिञ्च गौरवान्वितां कृतवन्तः। इतिहास विधातृणां परम्परायां टण्डनखत्रीकुलोत्पन्नः मल्लोपाह्वयः राजा श्रीटोडरः महाराजस्य अकबरस्य राजसभायां नवरत्नेषु रत्नविशेषः सिन्धुदेशाद्भूतः शंसितः। पंचनददेशस्य लोकपरम्परानुसारं प्राचीनविद्वज्जनानुसारञ्च राज्ञः श्री टोडरमल्लस्य जन्म लाहौर (लाभपुर) देशे अभवत्। केचित् तु अस्य जन्म लाहौरस्य चूनियासंज्ञके ग्रामे अभवत् इति आमनन्ति।[11] अपरमतानुसारं राजा टोडरमल्लः अवधप्रान्तस्य लाहरपुरस्थाने जन्म लब्धवान्। अस्य जननीं विधवा असीत्। अल्पे वयसि वर्तमानः श्रीटोडरः जीवनारम्भं लिपिक इव कृतवान्। परिश्रमकौशलपुरुषार्थैश्च सः मुस्लिम राजसभायां प्रशासकीय पदं प्रतिष्ठां च लब्धवान्।

महाराज टोडरस्य वंशपरम्परा टोडरानन्दस्य प्रथमेभागे सर्गावतार सौख्ये प्राप्यते। तदुनसारं टण्डनोपाह्वये कुले बाल जातः। तस्मिन् कुले अतलि–दामोदर–अस्सू –द्वारकादास–द्विजमल्ल

भगवतीदासः सञ्जाताः। श्रीटोडरमल्लः भगवतीदासस्य पुत्रः कथितः।[12] श्री टोडरमल्लस्य जनकः तस्य शैशवे एव पंचत्वमाप्नोत्।[13] सः जीविकार्थं 1591 खीष्टाब्दे मुज्फ्फरखाँ महोदयस्य समीपं लिपिकस्य कार्यमकरोत्। अध्ययने तस्य अभिरुचिः अतीव आसीत्। 1592 तमे खीष्टाब्दवर्षे श्री टोडरमल्लः महाराजस्य अकबरस्य सेवायामागतवान्। गुर्जरदेशस्य विजयानन्तरमष्टादश वर्षीयः अयं राजपुरुषः सञ्जातः। अकबरस्य प्रतिनिधिरूपेण सः विहारबगँ उत्कलदेशान् विजितवान् द्वाविंशति वर्षीयः श्री टोडरः अकबरस्य मन्त्रित्वमाप्नोत्।[14]

1570 तमे वर्षे सः दीवान पदमलङ्कृतवान्।[15] राजस्व मत्रीभूत्वा सः विभिन्नानि संशोधनानि कृतवान्। प्रथमतः तेन लेखायाः भाषागत संस्कारो अकारि। एतत् पूर्वं हिन्दुलिपिकानां (मुहर्रिर) अभिलेख हिन्दी भाषायां मुस्लिमलिपिका नामाभिलेखः फारसीभाषायामासीत्। श्री टोडरः कार्यालयाभिलेखस्य भाषा फारसी भाषा इति उद्घोषितवान्। राजपुरुषाणां कर्मचारिणां कृते फारसी ज्ञानमनिवार्यं कृतवान्।[16]

भूमिविषयक संशोधनमपि तेन कृतम्। सः कृषिकर्मणि प्रयुक्तेषु भूखण्डेषु करसंग्रहं सस्योत्पादनं विचार्य पृथक्–पृथक् कृतवान्।[17] भूमापने अपि संशोधनमभवत्। मापनाय प्रयुक्तं मापनसूत्रं तनाबीजरीबसंज्ञकं स्थले जले च क्षयं वृद्धिं च अवाप्नोति स्म। टोडरमल्लः षष्टिदण्डमानस्य वंशदण्ड कृतवान्। तन्मध्ये लौहश्रृंखलाः[18] भवन्ति स्म। यस्मात् पार्थक्यं न जायते स्म। श्रीटोडरमल्लः सर्वान् प्रदेशान् द्वादशजनपदेषु विभज्य तेषा दशवर्षीयां करव्यवस्थां कृतवान्। रूप्यकस्यमूल्यांकनं चत्वारिशंद् 'दाम्' इत्यभवत्।

1570 संवत्सरे स्वर्णात् ताम्रमुद्रापर्यन्तं संशोधनमभवत्। सैनिकानां वेतननिर्धारणं तैस्सह मृदुव्यवहारः भवेत्, इत्यपि कृतवान्।[19] क्रय–विक्रय–करसंग्रह–वेतनादीनां कृते, नृपादीणां कृते च रजतमुद्रा 'टङ्का' आसीत् किन्तु जनमसामान्ये दाम इत्यस्य प्रचनमासीत्। एवं तेन देशस्यार्थनीतिं निर्धारितवान्।

इत्थं विलक्षण प्रतिभासम्पन्नः उग्रस्वभावो अनुशासनप्रियः कर्मणि कुशलः श्रीटोडरमल्लः आलोचकैः निन्दितः अपि प्रशंसितः आसीत्। सः मूगलराज्यस्य भूषणः आसीत्। 'खुलास–तुल–तवारीख' ग्रन्थानुसारं सः प्रशासनस्य, अर्थव्यवस्थापाः, लेखाभिलेखस्य कार्यालयस्य च मर्मज्ञः आसीत्। अस्य कार्यकालः 1565 मिताब्दात् 1589 खीष्टाब्दं यावत् आसीत्।[20]

## संदर्भ संकेतः

1. भृगरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा। नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः।।
ब्रह्माकुमारो नन्दीशः शौनको गर्ग एव च। वासुदेवो अनिरुद्धश्च तथा शुक्रवृहस्पती।।
अष्टादशैते विख्याताः शिल्पशास्त्रोपदेशकाः। मत्स्यपुराण 252/2–4
2. वास्तुसौख्यम्, श्लोक–6
3. डेविड पिंगरे – ज्योतिशास्त्र ऐस्ट्रल एण्ड मैथेमेटिकल लिटरेचर,

ए हिस्ट्री आफ इन्डियन लिटरेचर, भाग–6(4), पष्ष्ठ–116

4. के. एम. के. शर्मा, टोडरानन्द, जर्नल आफ गंगानाथ झा
रिसर्च इन्स्टीट्यूट, भाग–3, 1945–46, पृष्ठ–63

5. के. एम. के. शर्मा, तथैव पृष्ठ–66

6. डेविड पिंगरे – अपरलिखित, पृष्ठ–116

7. के. एम. के. शर्मा, तथैव पृष्ठ–66

8. के. एम. के. शर्मा, तथैव पृष्ठ–66

9. डेविड पिंगरे – पूर्वोक्त, पृष्ठ–116

10. डेविड पिंगरे – पूर्वोक्त, पृष्ठ–116

11. अकबरी दरवार, भाग–3 (हिन्दी अनुवाद रामचन्द वर्मा), पृष्ठ–119

12. के. एम. के. शर्मा, टोडरानन्द, जर्नल आफ गंगानाथ झा
रिसर्च इन्स्टीट्यूट, भाग–3, 1945–46, पृष्ठ–64

13. आइने अकबरी 2, पृष्ठ–378

14. आइने अकबरी 2, पृष्ठ–376

15. आइने अकबरी 2, पृष्ठ–377

16. आइने अकबरी 2, पृष्ठ–377

17. अकबरी दरबार 3, पृष्ठ–149

18. अलबदायूनी – हिस्ट्री आफ इण्डिया, पृष्ठ 192

19. अकबरी दरबार 3, पृष्ठ–141, 142

20. डेविड पिंगरे – ज्योतिशास्त्र ऐस्ट्रल एण्ड मैथेमेटिकल लिटरेचर,
ए हिस्ट्री आफ इन्डियन लिटरेचर, भाग–6(4), पृष्ठ–116